भावस्य इष्टत्वात्, व्यवहारालम्बनस्य व्यवहारादेव सिद्धत्वात्। कथं च अपरिमितेश्च अवान्तरसङ्ख्यानिवेशः सङ्ग्राहकाभावात् द्रव्यत्वादिना सङ्गृहीतेषु स्यादिति चेत्, न; सन्मात्रेणाभिन्नेन द्रव्यत्वादिना तत्सङ्ग्रहस्य अयुक्तत्वात्। न हि सङ्ग्राहकमियदेव इति नियन्तुं शक्यं, सङ्ग्राहकान्तरस्यापि सम्भावनोपनीतस्य अपह्नोतुमशक्यत्वात्। तस्य अनुपलब्धिः सङ्ग्राहकनियतिः इति चेत्, न; प्रागुक्तन्यायस्य अनुसम्बन्धेयत्वात्, अनुपलम्भमात्रस्य अतिप्रसङ्गित्वात्, योग्यानुपलम्भेऽपि योग्यताविरहिणः शङ्कितसङ्ग्राहकस्य दुर्निवारत्वात्। प्रमाणाभावात् तदनिश्चितिः—इति चेत्, न; प्रमाणाभावाविशेषात् तदसत्त्वस्यापि दुरवधारणत्वात्। सत्त्वं न सर्वसङ्ग्राहकं, तस्य अतन्मात्रत्वे अनेकत्वसम्भवात् कुतोऽवान्तरसङ्ख्या—इति चेत्, न; द्रव्यत्वादिना सङ्गृहीतेषु प्रत्येकं—नव चतुर्विंशतिः—इत्याद्यवान्तरसङ्ख्यावत् उपपत्तेः; सत्त्वेन वा संगृहीते सर्वस्मिन् एकत्वेन अवान्तरसङ्ख्याभावे किं नः छिद्यत इ(ति,) "मीयमानैकरूपेषु न निषेधोऽवकाशवान्"—इति न्यायात्। किञ्च पदार्थपरिगणनवशेनैव परिलब्धतया षट्—इत्यादिवचनं अधिकार्थत्वादनर्थत्वात् अनर्थकम्। लब्धैव संख्या वाचिना पदेन स्फुट्यते—इति चेत्, न; प्रागेव स्फुटत्वात्; अन्यथा प्रयोगानवस्थानात्। साधारणत्वेन प्रतीतौ तद्वचनं—इति चेत्, (न;) तावतामेव परिगणननियमात् असाधारणत्वसिद्धेः॥

किञ्च, षट्कादि (१) स्वरूपं (२) धर्मो वा ? प्रथमे तन्निर्देशादेव तल्लाभात् पृथक्कथनमनर्थकमेव। द्वितीयेऽपि स—अभावश्चेत्, न; अभावे चतुष्ट्वमेव शक्यम्, स्वाश्रयत्वायोगात्। तद्भेदश्च—भावश्चेत्—न तत्र सिध्यति, भा[illegible]स्य अभावनिष्ठत्वाभावात्; अभावश्चेत्—तद्भेदस्य अभावत्वेन असत्त्वात् उक्तं आश्रयत्वम्। भावेऽपि, षट्कवत् ससत्वादेरपि अभावीभूतस्य सम्भवात् षडिति निर्देशो युज्येत सम्भवश्चेत्, तथाऽपि न अभावे चतुष्ट्वसिद्धिः, भावस्य अभावनिष्ठत्वानभ्युपगमात्। तस्य च द्रव्यादिषु अनन्तर्भावे पदार्थातिरेकः। अन्तर्भावेऽपि, द्रव्यत्वात्मत्वे—गुणाद्यनुपपत्तिः; न गुणकर्मणोः तदन्तर्भावः, दोषसाम्यात्; सामान्यान्तर्भावे, सामान्यादिषु तदयोगः; विशेषान्तर्भावे नित्यद्रव्यातिरिक्तौ तदयोगः; समवायान्तर्भावे तत्रैव तदसिद्धिः; तस्य सङ्ख्याविशेषत्वेऽपि गुणादौ न[illegible]नुपपत्तिः उक्तैव।

यत्तु—पदार्था भावात्मानः षडेव—इति, तत्रोच्यते—

अन्ययोगव्यवच्छित्तिरयोगमुपढौकते।

किं षडेव इति (१) अन्ययोगव्यवच्छित्तिः एवकारार्थः, किंवा (२) अयोगव्यवच्छित्तिः। न आद्यः; तस्य प्रमितत्वे—प्रमितिविरोधात् व्यवच्छित्त्यनुपपत्तेः; अप्रमितत्वे—प्राप्त्यभावादेव अव्यवच्छेदात्, लब्धरूपस्य व्यवच्छेदाभ्युपगमात्। अन्यथा व्यवच्छेदस्य निरङ्कुशत्वेन अप्रतिपन्नविश्वग्रासित्वात्, अनुपलब्धसत्ताभावे क्षणमात्रावच्छिन्नसत्ताकोपलब्धिविषयीकृतस्यैव सत्त्वं-इति क्षणभङ्गवादप्रसङ्गात्। भ्रान्तिसिद्धस्य व्यवच्छेदभावात् न—इति चेत्, (न;) तस्य प्रतीतावप्रतीतौ वा भाववाचोयुक्तेः रिक्तत्वात्; तस्य प्रतिपन्नत्वे—पदप्रतिषेधे पदार्था(ति)रेकात्, प्रतिषेधस्य च प्रतीतिविरोधेन अयुक्तत्वात्; अप्रतिपन्नत्वे वा-प्रसक्तप्रतिषेधात् पदार्थातिरेकप्रसक्तिध्रौव्यात्, भ्रान्तेश्च भ्रान्तियोगित्वाङ्गीकारात् क्वापि व्यवच्छेद्यसत्त्वापत्तेः। कथं चात्र लब्धरूपे लब्धरूपं निषिध्यत इति—नियमः सिध्यति, षड्बाह्ये पदार्थत्वस्य निषेधात्—इति चेत्, न; तस्य भावत्वे द्रव्यादितुल्यत्वात्, अभावत्वे (स?)दैव निषिद्धत्वात्। एतेन-पदार्थे षड्बाह्यत्वं निषिध्यत इति-निरस्तं, तस्य भावत्वे अभावत्वे च निषेधायोगात्॥

किञ्च, पदस्य शब्दे प्रमाणे च वृत्तेः, वाच्यत्वं मेयत्वं वा पदार्थत्वम्। उभयथाऽपि न। उभयथा निषेधो वाच्यत्वयोः। अभावेऽपि—भावाद्भावत्वं तथा—इति चेत्, न; नियामकाभावात्, पदशक्त्यनुसारिणः सङ्केतस्य उचितत्वात्। भावे ह्यपि—तच्छक्तेः इत्थं-इति चेत्, न; सङ्कोचकमन्तरेण भावस्य अपदार्थत्वायोगात्॥ षड्बाह्यत्वं न पदार्थवृत्ति, षड्बाह्यमात्रवृत्तित्वात्, अभावत्ववत्-इति चेत्, न; तस्य भावत्वे व्याघातात्, अभावत्वे धर्मिदृष्टान्तयोरेकत्वे धर्मिवत् दृष्टान्तेऽपि साध्यसन्देहात्; तद्वत् धर्मिण्यपि वा साध्यनिश्चयेन सिद्धसाध्यत्वात्। एतेन—पदार्थत्वं न षड्बाह्यवृत्ति, पदार्थमात्रवृत्तित्वा(त्,) द्रव्याद्यभावत्ववत् इत्यपि—सम्भवात्, अभावस्य पदार्थतया साधनविकलता इति चेत्, न; तस्य (?अ)पदार्थत्वात् दृष्टान्तेऽपि तथात्वस्य वक्तुं सुकरत्वात्। भावत्वं द्रव्यादिसमवायान्तमात्रवृत्ति, भावमात्रवृत्तित्वात्, त(स?)द्वत्—इति चेत्, न; तयोरभेदे, प्राचीनदोषानुषङ्गात्; भेदे च—भावत्वस्य अधिकवृत्तित्वे व्याघातात्, न्यूनवृत्तित्वे च तद्भेदस्य अनिबन्धनत्वात्, द्रव्यादिसमवायान्तस्यैव ते भावात् तन्मात्रवृत्तित्वेन साध्याविशिष्टतापातात्; भावत्वं द्रव्यादिसमवायान्तमात्रवृत्ति न भवति, भाववृत्तित्वात्,

घटवत्–इति च प्रयोगस्य सुवचत्वात् । न च–अधिकवृत्तित्वे साध्ये दृष्टान्तस्य साध्यविकलत्वं, न्यूनवृत्तित्वे च भावत्वग्रहविरोध इति–वाच्यम्; तन्मात्रवृत्तित्वाभावमात्रस्य अविवक्षितविशेषस्य साध्यत्वात्; अन्यथा–आत्मा सप्रतियोगिकभेदवान् वस्तुत्वात्–इत्यत्रापि तु, अस्य अन्यस्य वा प्रतियोगित्वायोगे वस्तुत्वस्य असाधकत्वप्रसङ्गात् । न च भावत्वन्यूनवृत्तित्वं उपाधिः, मेयत्वादौ साध्यव्याप्तेः । न च द्रव्यादिसमवायान्तत्वे व्यभिचारः, तस्य त्वन्मते भावत्वानतिरेकात्, अस्मन्मते च तस्य तत्स्वरूपत्वात् ।

न द्वितीयः; अयोगव्यवच्छित्तेः एवकारमन्तरेण–पदार्थाः षड्–इति व्यपदेशादेव सम्भवात् । सा हि योगे पर्यवस्यन्ती निर्देशादेव तत्सिद्धेः न अवधारणं आकाङ्क्षति । भावत्वाधिष्ठितासु व्यक्तिषु प्रत्येकं द्रव्यादिषट्कविच्छेदमेलकव्यवच्छेदार्थं अवधारणं अर्थवत्, इति चेत्, न; यस्यामेकस्यां व्यक्तौ षट्कात्यन्ताभावसमुदायाभावोऽभिमतः स द्रव्यादिशब्दवाच्यो न वा? प्रथमे, द्रव्यादिव्यक्तौ एव षट्कात्यन्ताभावसमुदायविच्छित्तिसाधनात् न पदार्थान्तराभावः सिध्येत् । द्वितीये, द्रव्याद्यन्यतमशब्दानभिधेयभावव्यक्तिप्रमितौ—तत्र द्रव्यादिषट्कात्यन्ताभावसमुदायावश्यम्भावात् न तद्व्यवच्छेदः; तदप्रमितौ अपि—धर्मसिद्धेः स एव दोषः; भ्रान्तिसिद्धत्वेऽपि—प्रागुक्तं न प्रत्युद्ध्रियेत । द्रव्यादिशब्दवाच्यत्वावाच्यत्वोदासीनभावव्यक्तौ विवक्षितव्यवच्छित्तिः—इत्यपि न तावत्, दृश्याभावव्यक्तेः अप्रामाणिकत्वात्, प्रामाणिकत्वे च प्रागुक्तदोषप्रसङ्गात् ।

तथा च—" भावत्वाधिष्ठिताः सर्वाः प्रत्येकं व्यक्तयो मताः ।
द्रव्यादिषट्कविच्छेदमेलकेन विवर्जिताः ॥ "—

इति प्रमत्तगीतम् । एतेन—नवैव इत्यादिनियमो निरसनीयो न्यायसाम्यात्—इ(ति स्थि)तम् ॥ ७ ॥

यत्तु पदार्थविभागवचनं–द्रव्यगुणकर्मसामान्यविशेषसमवायाः षट् पदार्था इति–तत् असत्—

सर्वानुवृत्ते सामान्ये व्यावृत्तानां प्रवेशतः ।
पृथक् कथा वृथा तेषां तदुक्त्यैवोक्तिसिद्धितः ॥

न तावत् एते पदार्था मिथो विलक्षणा युज्यन्ते, सर्वत्र अनुवृत्ते सत्तासामान्ये परिशिष्टानां अन्तर्भावसम्भवात्, तस्यैव एकस्य तेनतेनात्मना प्रथ-

मानत्वोपपत्तौ वस्तुभेदकल्पनाया निष्प्रयोजनत्वात् । तथा च, घटः सन्पटः सन्नित्यादि प्रत्यक्षं एतदनुकूलं आलक्ष्यते । उक्तं च—

"एकस्यैवास्तु महिमा यन्नानेव प्रकाशते" इति ।

यत्तु–द्रव्याधीनत्वं इतरेषां–इति तत् अयुक्तम्—

आत्यन्तिकपृथक्त्वे हि तथात्ववचनं कथम् ।
सम्बन्धतश्चेत् तत्रापि व्यवस्था दुःस्थिता भवेत् ॥

न हि गुणादीनां द्रव्याधीनत्वं एष्टुं शक्यं—अत्यन्तभिन्नत्वाङ्गीकारविरोधात्, तथापि समवायात् तदधीनत्वं–इति चेत्, तर्हि सामान्योपाधौ गुणस्य द्रव्याधीनत्व( व )त् कर्मणो मूर्ताधीनत्ववत् विशेषाणां नित्यद्रव्याधीनत्ववच्च सामान्यस्य द्रव्यगुणकर्माधीनत्वं, समवायस्य द्रव्यादिपञ्चकाधीनत्वं च इति अव्यवस्थापत्तिः । तथा च तयोः आश्रयाव्यवस्थावत् आश्रितत्वाव्यवस्थाऽपि स्यात् ॥ तथापि शेषाणां द्रव्याधीनत्वं अविरुद्धं–इति चेत्, मैवम् ।

द्रव्याधीनत्वगीरेषा मृषा तल्लक्षणादृते ।
गुणवत्त्वमतिव्याप्तेरव्याप्तेश्च न युक्तिमत् ॥

द्रव्ये खलु असिद्धे कथं इतरेषां तदधीनत्वं, तत्सिद्धिश्च कथं ऋते लक्षणात् भवेत् ।

न च किमपि द्रव्यस्य लक्षणम् । (१) गुणवत्त्वं तल्लक्षणं इति चेत्, न; कार्यद्रव्यस्य उत्पत्त्यनन्तरं क्षणमात्रं गुणरहितस्थितेः इष्टत्वात् अव्याप्तेः । (२) गुणवत्त्वात्यन्ताभावानधिकरणत्वं विवक्षितं–इति चेत्, न; तस्मिन्नेव अत्यन्ताभावे अतिव्याप्तेः । तद्भेदानियमात् तस्मिन्नपि तदत्यन्ताभावसम्भवात् नैवं—इति चेत्, तर्हि (३) गुण(व)त्त्वप्रतियोगिकसर्वात्यन्ताभावानधिकरणत्वस्य वा लक्षणत्वे सैव अतिव्याप्तिः । (४) भावत्वे सति—इति विशेषणीयं—इति चेत्, न; तस्य निरस्तत्वात् ॥

किञ्च, (१) यत्किञ्चिद्गुणवत्त्वं (२) सर्वगुणवत्त्वं वा अत्यन्ताभावाप्रतियोगि ? न आद्यः, प्रतियोगिभूतस्य एकैकस्य गुणस्य सर्वत्र असम्भवेन लक्षणस्य अननुगतत्वापातात् । न द्वितीयः, असंभवित्वात् । संख्यावत्त्वं प्रतियोगित्वेन विवक्षितं—इति चेत्, न; गुणादौ अतिव्याप्तेः । सङ्ख्यैकार्थसमवायात् तत्र सङ्ख्याबुद्धिर्न मुख्या–इति चेत्, तर्हि सत्तैकार्थसमवायात् तत्र सत्ताधीः न मुख्या इत्यपि स्यात् । गुणादौ निर्गुणत्वाङ्गीकारभङ्गो बाधकः;

नैवं इतरत्र,–इति चेत्, न; गुणादेः निर्गुणत्वसिद्धौ तत्र सङ्ख्याबुद्धेः अमुख्यत्वसिद्धिः, तत्सिद्धौ च तस्य निर्गुणत्वसिद्धान्तसिद्धिः—इति परस्पराश्रयात्; अभ्युपगमस्य च अभ्युपगमान्तरेण निरसनीयत्वात् ॥

एतेन पृथक्त्वस्य अत्यन्ताभावप्रतियोगित्वं प्रत्युक्तम् । संयोगविभागपरिमाणानां अन्यतमस्य प्रतियोगित्वे नायं दोषः–इति चेत्, न; प्रत्येकं संयोगविभागयोः त्रैविध्यात् परिमाणस्य चातुर्विध्यात्, एकैकस्य वा सर्वस्य वा प्रतियोगित्वविवक्षायां लक्षणस्याननुगमासम्भवित्वयोः सम्भावि(त)त्वात्, अन्यतरकर्मजसंयोगस्य तथाविधविभागस्य च सर्वत्र असम्भावितत्वात् । तद्वत्त्वस्य प्रतियोगित्वं–इति चेत्, न; विभूनां आत्मादीनां प्रदेशाभावात्, प्रदेशप्रवृत्तिसंयोगादेः असम्भवस्या(त्वा?)भिधानस्य मानत्वेन अव्याप्तेः । न च आत्मनिर्गुणत्वं इति आत्मपरीक्षायां वक्ष्यते ॥

(५) समवायिकारणत्वं तल्लक्षणं—इति चेत्, न; गुणादौ अतिव्याप्तेः उक्तत्वात् । किञ्च, स्वाश्रितकार्यारम्भकत्वे समवायिकारणत्वे तस्य परैरव(न ?)भ्युपगमात् असम्भवित्वम् । परिणामत्वे विवर्ताश्रयत्वे वा तस्य आरम्भवादिभिः(नां?) अनिष्टतया, स एव दोषः । समवायानभ्युपगमपक्षे वाऽसंभवित्वमेव । (६) द्रव्यत्वजातिमत्त्वं तल्लक्षणं—इति चेत्, न; द्रव्यत्वजातिसिद्धौ तदाश्रयद्रव्यभेदसिद्धिः, तत्सिद्धौ च तदनुगतजातिसिद्धिः–इति परस्पराश्रयत्वात्; द्रव्यत्वजातेश्च निर्वक्तव्यत्वात् । (७) आकाशवृत्तिसत्ताव्याप्यजातिः—इति वा, (८) क्रियासमानाधिकरणसत्ताव्यवहितावान्तरजातिः—इति वा, (९) संयोगवद्वृत्तिसत्तासाक्षान्न्यूनवृत्तिजातिः—इति वा, तन्निर्वचनं इति चेत्, न; सत्तानभ्युपगमपक्षे विशिष्टनिर्वचनस्य असम्भवित्वात् ॥

न च द्रव्यत्वे व्यञ्जनमस्ति, गुणवत्त्वस्य समवायिकारणविप्रतिपत्त्या अभावप्रसङ्गात्; तन्मात्राच्च जातिस्वीकारे, धर्माधर्मयोः अदृष्टत्वस्य वा तथात्वे, गुणादौ अपि तत्प्रसङ्गात्; स्वातन्त्र्यस्य च कार्यद्रव्येषु अभावेन व्यञ्जकत्वायोगात् ॥

प्रमाणमपि द्रव्यत्वे (१) प्रत्यक्षं (२) अनुमानं वा ?

न आद्यः, लौकिकपरीक्षकसंप्रतिपन्नस्य अनुगतप्रत्ययस्य तत्र प्रमाणत्वे विप्रतिपत्त्यभावप्रसङ्गात्; तन्मात्राच्च जातिस्वीकारे धर्माधर्मयोः अदृष्टं–अदृष्टमित्यनुगतप्रत्ययभाजोः अदृष्टत्वजात्यङ्गीकारापातात्, तद्वदेव अनुगतप्रत्ययस्य नेतुं

उचितत्वात्। (द्रव्यत्वं) आकाशसत्तातिरिक्तजातिमत्, जातिमत्त्वात्, रूपादि-वत्–इत्यनुमानं अत्र मानमिति चेत्, न; सत्तामनिच्छतां अप्रसिद्धि(द्ध?)विशेष-(ण)त्वात्; गुणत्वस्य रूपत्वादेश्च निराकरिष्यमाणतया साध्यविकलत्वाच्च; हेतुप्रतिज्ञयोश्च मतुपा समवायस्य विवक्षितत्वात्, तन्निराकरणादेव असिद्ध्य-प्रसिद्धविशेषणत्वयोरापत्तेः। संयोगविभागजनकत्वात् कर्मवत् आकाशे यथो-क्तसाध्यसिद्धिः–इति चेत्, न; कर्मत्वानङ्गीकारवादे दृष्टान्तस्य साध्यविकल-त्वात्। सत्ता आकाशवृत्तिजातेः अन्या जातित्वात्, गोत्ववत्–इति चेत्, न; सत्तामनभ्युपगच्छतां आश्रयासिद्धेः उक्तत्वात्, प्रमेयत्वोपाधिनैव सत्–सदिति व्यवहारोपपत्तौ तत्सामान्याङ्गीकारवैयर्थ्येन हेत्वसिद्धेश्च ॥ तस्मात्—व्यवहा-रालम्बनमेव द्रव्यं, न वस्तु किञ्चित्–इति स्थितम् ॥ ८ ॥

किञ्च–द्रव्ये नवत्वनिर्बन्धो नैव सिद्धिमुपाश्नुते ।
तमसो दशमस्यापि संसिद्धेर्मानयुक्तितः ॥

न हि–पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि (न)वै(व)(द्रव्या)णि इति–युक्तम्, रूपादिमतः तमसो दशमस्य दृश्यमानत्वात्। न च अप्रतीतौ एव प्रतीतिभ्रान्तिः, आलोकप्रतीत्याः तमःप्रतीतेः अविशेषात्। न च–प्रकाशानपेक्ष-चक्षुषो रूपिधीजनकत्वानुपपत्त्या 'तमो नीलं' इति धीः सिताभावविषयत्वेन औपचारिकी इति–वाच्यम्; तत्तद्बुद्धेर्विचित्रसामग्रीकत्वात्, 'तेजः शुक्लं' इति-वत् 'तमो नीलं' इति धियोऽपि मुख्यत्वोपपत्तेः। अस्तु तर्हि तस्या भासं-सर्गाभावविषयत्वं इति चेत्, न; तस्य तद्व्यङ्ग्यत्वाङ्गीकारात्। यस्य खलु आ-लोकसंसर्गाभावस्य तमोबुद्धिविषयत्वं इष्टं, तस्यैव तद्व्यञ्जकत्वम्। गौरवात् न–इति चेत्, न; व्यञ्जकमादाय व्यङ्ग्यापलापे अतिप्रसङ्गात्। अन्वयव्यतिरेकौ च व्यञ्जकविषयत्वे अन्यथासिद्धौ। न च आलोकसंसर्गाभावे तदीयप्रागभावादि-विकल्पानुप्रवेशात् व्यञ्जकत्वानुपपत्तिः आशङ्कितव्या; तदीयतमस्त्वानुपपत्ते-रपि विकल्पद्वारायाः तुल्यत्वात्, अनिर्वक्तव्यतावादे च–प्रतीत्यनुसारिणो व्य-ङ्ग्यव्यञ्जकभावस्य सुवचत्वात् ॥

यत्तु–विमतः तमःशब्दवाच्यः परस्पराभावातिरिक्तालोकसंसर्गाभाव-त्वात्, आलोकवत्–इति व्यतिरेक्यनुमानं–तत् असत्। विमतः प्रकाशशब्द-वाच्यः, इतरेतराभावातिरिक्ततमस्संसर्गाभावत्वात्, तमोवत्—इत्यपि व्यति-रेकिणो वक्तुं शक्यत्वात्। मनस्त्वं स्पर्शवद्वृत्तिवेगवद्वृत्तिजात्यन्य(त्,) जाति-

त्वात्, गोत्ववत्—इत्यपि प्रयोक्तुं सुकरत्वात्। आत्मत्वं स्पर्शवद्वृत्तिज्ञानव-वृत्तिजात्यन्य(त्,) जातित्वात्-इति आभाससमानता-इति चेत्, तर्हि सर्वास्वेव महाविद्यासु एवं आभाससमानतासम्भवात् उच्छिन्नसंकथाः ताः स्युः। परमतेन तत्प्रयोगोऽस्माकमिति न अनिष्टापत्तिः। तदेवं मूलकारणस्यैव बहिर्विवर्तमानस्य तमोव्यवहारालम्बनस्य दशमत्वसम्भवात्, न द्रव्येषु नवत्वनियमसिद्धिः॥ ९॥

किञ्च–पृथिव्या न हि सामान्यं नोपाधिरुपढौकते।
लक्षणत्वमतिव्याप्तेरसिद्धेश्चोक्तयुक्तितः॥

न च पृथिव्या लक्षणं किञ्चित् उत्प्रेक्ष्यते। न तावत् (१) पृथिवीत्वं–एव तल्लक्षणं युक्तं, परस्पराश्रयग्रस्ततया तस्य असंभवित्वात्। न च पृथिवीत्वे लक्षणं प्रमाणं वा अस्ति–इति सामान्याधिकारे वक्ष्यते।

नापि (२) गन्धवत्त्वं–तल्लक्षणम्, सलिलादौ अपि तदुपलब्ध्याऽतिव्याप्तेः। पृथिवीसंबन्धात् अन्यत्र तदुपलब्धिः–इति चेत्, न; नियामकाभावात्। कुसुमादिसन्निकर्षाभावे तदनुपलब्धिनियमात् इत्थं इति चेत्, न; सलिलाद्यवयवासन्निकर्षे कुसुमादौ अपि कदाचित्तदनुपलम्भनियमात्। तत्रापि मात्रया गन्धोपलब्धिरस्ति–इति चेत्, तर्हि मात्रया भूतान्तरसंसर्गोऽपि तत्र अस्तीति, न पृथिवीमात्रस्य गन्धवत्त्वम्।

"उपलभ्याप्सु चेद्गन्धं केचिद् ब्रूयुरनैपुणाः।
पृथिव्यामेव तं विद्यादपो वायुं च संश्रितम्॥"—

इत्याप्तोक्तिविरुद्धं एतत्—इति चेत्, न; तस्य प्रायिकाभिप्रायत्वात्। आप्तवाक्यं हि प्रायोवृत्त्या पृथिवीनिष्ठगन्धमधिकृत्य अविरुद्धम्, कथमन्यथा तत्रापि तदुपलम्भं अभ्यनुजानीयात्। उपलब्धिः अथ(पि?)उपलभ्ये प्रमाणत्वात् अनन्यथासिद्धा उपलब्धिः तथा, प्रकृतात्तु भूतान्तरसंबन्धनिबन्धनात् नैवं–इति चेत्, न तर्हि क्वापि तत्प्रामाण्यं, पृथिव्यामपि भूतान्तरसंबन्धमन्तरेण गन्धोपलब्धेः असिद्धत्वात्। प्रलयदशायां परमाणुषु भूतान्तरायुक्तेष्वेव गन्धोऽस्ति-इति चेत्, न; प्रमाणाभावात्। न हि तत्र भूतान्तरासंसृष्टेषु परमाणुषु गन्धसिद्धौ किञ्चिदस्ति प्रमाणम्। कार्ये तदुपलब्ध्या तत्सिद्धिः—इति चेत्, तर्हि भूतान्तरसंसृष्टे तद्दृष्टिनियमात् तत्रापि तत्संसर्गः कल्पनीयः। न तर्हि प्रलयः स्यात्--इति चेत्, न; सजातीयासंयोगादेव तदुपपत्तेः, आकाशादिसंयोगस्य अवर्जनीयत्वात्।

किञ्च सौरभ्यासौरभ्यविशेषभाजो गन्धस्पर्शवद्द्रव्यभेदकत्वात् (३) विशिष्टगन्धवत्त्वस्य लक्षणत्वे कथं न अव्याप्तिः। (४) गंधवन्मा( त्रा )श्रयत्वस्य लक्षणत्वे, स्पर्शवन्मात्राश्रयत्वस्यापि लक्षणत्वापत्तेः अतिव्यापकत्वं प्रकृतेऽपि तुल्यम् । सविशेषणस्य नियमोऽपि तुल्यः । तथा च स्पर्शतुल्यो गन्धो न पृथिवीमात्रं लक्षयति । न च-पाकजविशेषगुणत्वात् गन्धो द्विविधोऽपि पृथिव्यामेव इति-युक्तम्, नियामकाभावात् ॥ गन्धत्वं पृथिवीगुणमात्रवृत्ति, पाकजगुणमात्रवृत्तित्वात्, पाकजविशेषगुणत्ववत्-इति चेत्, न; पैठरप्रक्रिया(यां)-हेत्वसिद्धेः। तत्र हि,पिठरेष्वेव पाको न परमाणुषु-इति स्थितेः, तद्गुणस्य पाचकत्वाभावात्,गन्धत्वस्य कार्यगन्धवृत्तितया पाकजगुणवृत्तितया पाकजगुणवृत्तित्वेऽपि तन्मात्रवृत्तित्वाभावात् परमाणुगुणस्य अपाकजस्यापि तदाश्रयत्वात्; पैलुपाकप्रक्रियायां तु—गन्धत्वं पृथिवीतदितरगुणवृत्ति, गन्धवृत्तित्वात्, गुणत्ववत्—इति प्रतिप्रयोगसम्भवात् । न च गन्धत्वाधिकवृत्ति( त्वं ) उपाधिः, समव्याप्तिपक्षे—पाकजविशेषगुणत्वे व्याप्त्यभावात्, विषमव्याप्तिपक्षेऽपि—यत्र गन्धत्वाधिकवृत्तित्वाभावः तत्र पृथिवीतदितरगुणवृत्तित्वराहित्यमिति व्यतिरेकस्य अयोगादव्याप्तिः, पृथिवीतदितरगुणवृत्तित्वस्य सुरभित्वादौ उदीरि(त)त्वात् । उक्तं हि सलिलादौ अपि सुरभित्वादेर्व्यक्तत्वम् ॥

(५)पाकजरसवत्त्वं वा,(६)पाकजरूप( व )त्त्वं वा,(७) पाकजस्पर्शवत्त्वं वा, पृथिवीलक्षणं-इति चेत्, न; पाकात्प्राचीने घटादौ तदभावात् अव्याप्तेः।तत्रापि तज्जातीयवत्त्वात् न—इति चेत्, तर्हि सलिलादावतिव्याप्तिः, तज्जातीयवत्त्वस्य तत्रापि सुसंपादत्वात् । (८)पाकजरसात्यन्ताभा(वा)नधिकरणं इत्यादिनिर्देशेन अव्याप्तिसमाधिः-इति चेत्, न; पाके सति पूर्वद्रव्योत्पत्तेराश्रयणात्, एकस्य द्रव्यस्य उक्तलक्षणत्वासम्भवात् । न च-पूर्वोत्तरद्रव्यभेदेऽपि पाकस्य प्रवाहरूपेण अनादितया पूर्वस्मिन्नपि द्रव्यतज्जन्यरूपादिमत्त्वसिद्धिः, सूर्याग्निपाकानेकत्वे किं-पाकजन्यत्वं रूपादेरभिमतं इति दुर्ज्ञानतया-लक्षणस्य अननुगमात्, पाकप्रवाहस्य अवस्तुत्वेन अर्थक्रियाभावात्; पाकमात्रविवक्षायां, उत्पन्नमात्रविनष्टघटादौ तदभावात् ।

एतेन-(९)गन्धसहचरितचतुर्दशगुणवत्त्वं पृथिवीलक्षणं-इति प्रत्युक्तम्, गन्धवत्त्वस्य द्रव्यान्तरेऽपि संभवाभिधानात्; गन्धवत्त्वेनैव विवक्षितसिद्धौ च, विशेष्यवैयर्थ्यात् ।

अतो न किञ्चिदपि पृथिव्याः लक्षणं अस्ति ॥ १० ॥

किञ्च—विशेषणप्रसिद्धौ च व्यतिरेकः कुतो न्वयम् ।
तदप्रसिद्धौ पक्षः स्यादप्रसिद्धविशेषणः ॥

पृथिवी अ(बा)दिभ्यो भिद्यते, पृथिवीत्वात्—इत्यादिलक्षणव्यतिरेकानुमानं लक्षणमिष्यते। तत्र च अबादिभेदः(१)विनाऽनुमानेन प्रमितः(२)अप्रमितो वा? प्रथमे, किं अबादिष्वेव प्रमीयते पृथिव्यां वा? न आद्यः, व्याघातात्, पृथिवीत्वादेश्च असाधारणत्वात्। न द्वितीयः, अनुमानवैयर्थ्यात्। न खलु, अनुमानमन्तरेण अबादिभेदे पृथिव्यां प्रमिते—पुनरनुमानं अर्थवत् भवितुं उत्सहते, अप्रमिते वा—अप्रसिद्धविशेषणत्वं, कुम्भादौ अबादिभेदस्य प्रमितत्वात्। पृथिवीमात्रे च तस्य साध्यत्वात् नैवं इति चेत्, न; कुम्भादेः सपक्षत्वं पक्षत्वं वा? प्रथमेऽपि तत्र पृथिवीत्वं अस्ति न वा? न आद्यः, व्यतिरेकत्वव्याघातात्। न द्वितीयः, पृथिवीत्वस्य साधारणत्वापातात्। नापि द्वितीयः, तस्य पक्षत्वे तदंशे साधनवैयर्थ्यात्।

ननु किमिदं वैयर्थ्यं? संप्रतिपन्नार्थगोचरत्वं वा, तदितरासाधकत्वं वा? न आद्यः, धूमानुमानादेरपि तथात्वप्रसङ्गात्, पर्वतादेरुभयसंप्रतिपन्नस्य स्फुरणात्। न द्वितीयः, आ परमाणोः आ च भूगोलकं इतरव्यवच्छेदस्य संप्रतिपन्नातिरिक्तस्य प्रकृतेऽपि साध्यमानत्वात् * * * इति तदसत्। समुदायस्य समुदायिनो भेदे—समुदायिनि कुम्भादौ साध्यस्य सिद्धत्वे, तस्य च सपक्षत्वे तत्र हेतोः अवृत्तौ असाधारणत्वात्, वृत्तौ च व्यतिरेकित्वायोगात्; पक्षत्वेऽपि तदंशे सिद्धसाध्यत्वेन प्रयोगस्य अकिञ्चित्करत्वात्, तत्र साध्यप्रसिद्धौ च अप्रसिद्धविशेषणताया दु(रु)त्तरत्वात्; अभेदेऽपि—समुदायिपरिशेषे तत्र साध्यप्रसिद्ध्यप्रसिद्ध्योः उक्तदोषात् अन्यत्र तत्प्रसिद्ध्यभावात्; समुदायपरिशेषेऽपि तथैव; न च स्वातन्त्र्येण समुदायो नाम कश्चित् निश्चेतुं शक्यते।

ननु घटादौ उदकादिभेदं अनुमन्यमानं प्रति अन्वयव्यतिरेकित्वेन लक्षणमवतिष्ठते। तत्रापि विवदमानं प्रति व्यतिरेकित्वेन पर्यवस्यति। न च अप्रसिद्धविशेषणता; जलादिभेदः क्वचिदाश्रितः, भेदत्वात्, घटभेदवत्—इति सामान्यतो धर्मिसिद्धौ—तद्विशेषस्य व्यतिरेकिणा सिद्धेः; यद्वा, पृथिवी किञ्चित्प्रतियोगिकभेदवती, भेदवत्त्वात्, घटवत्—इति सामान्येन प्रतियोगिसिद्धौ—

---

* अत्र कश्चिदंशः पतितः संभाव्यते।

तद्विशेषस्य व्यतिरेकिणा सिद्धेः इति—तदयुक्तम् । लौकिकस्य परीक्ष(क)स्य वा घटादौ जलादिभेदानुमतिः? न आद्यः, तस्य औदासीन्यत्वात् । न द्वितीयः, तस्य परमाण्वादौ अपि तद्भेदानुमतेः अनुमानानुपयोगात् । किञ्च, न घटादौ उदकादिभेदानुमतिः उचिता, धर्मिप्रतियोग्य(गि?)सिद्धौ भेदसिद्धेः भेदसिद्धौ च इतरा(र?)सिद्धेः इतरेतराश्रयत्वात् । तथा च दृष्टान्तस्य साध्यविकलता । धर्मिण्यपि तुल्यत्वादुक्तदोषस्य, न अनुमानं उत्थातुमर्हति । न च लक्षणं अन्वयव्यतिरेकित्वेन लक्षणवादिना व्युत्पाद्यते । व्यतिरेकिणि अपि न अप्रसिद्धविशेषणतोद्धारः । न हि जलादिभेदः क्वचिदाश्रितो भेदत्वादिति सामान्यतो विशेषणसिद्धिः, जलादिभेदमेव अनङ्गीकुर्वतः प्रति आश्रयासिद्धेः । प्रत्यक्षत्वे तस्य अनुमानानर्थक्यम् । आश्रयसिद्ध्यर्थत्वात् न आनर्थक्यं—इति चेत् , न; भेदस्य उभयनिरूप्यत्वात् प्रत्यक्ष(व)देव तत्सिद्धेः । तद्विशेषसिद्ध्यर्थमिति चेत् , न; तस्यापि निर्विशेषसामान्यानुपपत्तौ च सिद्धत्वात् । यस्तु भेदमात्रमेव न अनुमन्यते तं प्रति कथं ' भेदत्वात् ' इति प्रयुज्यते; घटादिभेदस्य च असंप्रतिपत्तेः दृष्टान्तस्य आश्रयहीनता । सर्वमेतत् प्रसिद्धिसिद्धं-इति चेत् , वक्ति (न, किं?)-मिदानीं प्रसिद्धिमवलम्ब्य अनुमानं सिसाधयिषसि, तर्हि तथैव तदर्थसिद्धेः अनर्थकं अनुमान(मा)पद्येत । एतेन-पृथिवी किञ्चित्प्रतियोगिकभेदवती, भेदवत्त्वात्-इति प्रत्यूढं, तत्रापि स्वरूपासिद्ध्यादेः दुरुत्तरत्वात् । न च व्यतिरेकिणि विशेषणाप्रसिद्धिः अदूषणम्; भूः शशविषाणोल्लिखिता भूत्वात्-इत्यस्यापि सदनुमानत्वप्रसङ्गात् , तत्र असिद्ध्यादेर्दोषान्तरस्य अदर्शनात् । तर्हि, यद्व्यतिरेके सत्यसमीहितप्राप्तिः तदपि मानयोग्यं-इति न्यायेन, पृथिव्या जलादिभ्यो भेदाभावे सङ्करप्रसङ्गात् , तन्निष्ठतद्भेदस्य सामान्यतो मानयोग्यत्वसिद्धौ, तद्विशेषजिज्ञासायां व्यतिरेक्युपन्यासात् न अप्रसिद्धविशेषणता-इति चेत् , न; कल्पिते भेदवशात् असङ्करसिद्धौ भेदस्य मानयोग्यतोपन्यासासम्भवात्; अन्यथा प्रामाणिकभेदसिद्धौ असङ्करः, ततश्च तादृगेव (तादृग्भेद?)सिद्धिः इत्यन्योन्याश्रयात् । तस्मात्—न लक्षणं अनुमानतया शक्यनिरूपणं—इति सिद्धम् ॥ ११ ॥

किञ्च—लक्षणं न व्यवच्छित्तिफलकं संग्रहादृते ।
लक्ष्यासिद्धेर्न साजात्यं वैजात्यं वा प्रसिध्यति ॥

न खलु—सजातीयविजातीयव्यवच्छेदो लक्षणस्य फलं इति—युज्यते, सङ्ग्राहकमन्तरेण, 'एतावती पृथिवी' इति लक्ष्यनिर्धारणासिद्धौ, तत्सजातीयविजाती-

यानिश्चयात् तद्व्यवच्छेदस्य दुरनुष्ठानत्वात्। केनापि सङ्ग्राहकेण लक्ष्यनिर्धारणद्वारेण तत्साजात्यवैजात्यनिश्चयेन तद्व्यवच्छेदो लक्षणेन साध्यते चेत्, सङ्ग्राहकादेव लक्ष्यनिर्धारणसिद्धेः वृथा लक्षणकथा स्यात्। लक्ष्यसिद्धौ च तत्सजातीयविजातीयसिद्धिः, तत्सिद्धौ तद्व्यवच्छिन्नलक्ष्यसिद्धिः—इत्यन्योन्याश्रयनास्वरूपेण लक्ष्यसिद्धेः न—इति चेत्, न; सङ्ग्राहकं हि व्यावृत्तयावत्साधकं, अन्यथा तदुपन्यासवैयर्थ्यात्। तथा च न इतरेतराश्रयतासमाधिः। किञ्च सजातीयव्यक्तीनां आनन्त्यात् कुतः तासां एतावत्त्वं अन्तरेण सङ्ग्राहकं गृह्यते। तस्मिंश्च कस्मिंश्चित् गृहीते तस्य अनन्तासु व्यक्तिषु नियमेन निवेशसिद्ध्ये नियामकान्तरान्वेषणायां अनवस्थानात् कुतः तद्व्यवच्छित्तिफलकं लक्षणं सिध्येत्।

एतेन—विमतं पृथिवीति व्यवहर्तव्यं पृथिवीत्वात्—इति व्याख्यातं, तत्रापि पूर्वोक्ताप्रसिद्धविशेषणत्वादेः सत्त्वात्। यत्तु—पृथिवीत्वं अबादिभ्यो भिन्नानेकपृथिवीव्यक्तिमात्रनिष्ठं, पृथिवीशब्दवाच्यत्वात्—इति, तत्र आकृतेर्व्यक्तेश्च वाच्यत्वं व्यक्तेरेव वा इति पक्षे—कुम्भादिव्यक्तौ पृथिवीशब्दवाच्यत्वेऽपि यथोक्तसाध्याभावात् विरुद्धता; आकृतिपक्षेऽपि—तन्मात्रस्य वाच्यत्वे कथं असिद्धिः न भवेत्। न हि पृथिवीशब्देन आकृतिमात्रं असंपृक्तव्यक्तिकं वक्तुं शक्यते, गुणत्वादेरपि आकृतित्वाविशेषात् पृथिवीशब्देन वाच्यतापातात्। विशिष्टाकृतेः तथात्वेऽपि, घटादिव्यक्तिसंघटिताकृतेः तच्छब्दवाच्यायाः वृत्त्य(व्यक्त्य?)न्तरगामित्वे घटादेरपि विशेषणतया तन्निष्ठत्वप्रसक्त्या, जातेः यत्किञ्चिद्व्यक्तिनिष्ठायाः व्यक्त्यन्तरनिष्ठत्वानुपपत्तेः अनेकव्यक्तिसमवेतत्वासम्भवदोषः। व्यक्त्युपलक्षिताकृतेः वाच्यत्वे, कुतः तदुपलक्षणत्वं इति वीक्षायां, तदाक्रान्तत्वादिति वक्तव्यम्। तदपि कथं इत्यपेक्षायां, तन्मात्रेणोपलक्ष(ण)त्वादिति वक्तव्ये, कथं न इतरेतराश्रयता।

तस्मात्—पृथिवी न शक्या लक्षयितुं—इति सिद्धम् ॥ १२ ॥

किञ्च—अमितेरन्यतो भावात्तेन तद्व्यवहारतः।
लाघवान्न पृथक्त्वेन पृथिवीत्वमुपेयते ॥
स्वरूपत्वेन तद्योगः स्वाश्रयान्न विधर्मकम्।
निरस्तत्वादनिष्टत्वादुपाधेरनिरूपणात् ॥

किं इदं पृथिवीत्वं (१) जातिः (२) स्वरूपं वा (३) धर्मान्तरं वा ?

न आद्यः, तल्लक्षणस्य अप्रमितत्वात्। अयोगान्ययोगव्यवच्छेदेन गन्धवद्वृत्तिजातिः तथा—इति चेत्, न; सलिलादौ अपि गन्धवत्त्वस्य उक्तत्वेन असं-

भवित्वप्रसङ्गात्। न च तत् पृथिवीत्वं, अनभ्युपगमात्। द्रव्यत्वन्यूनवृत्तित्वे सति घटपटवृत्तिजातिः तथा-इति चेत्, न; द्रव्यत्वस्य प्रत्युक्तत्वात्, घटविशेषिताया जातेश्च पटेतरविशेषिताया घटे वृत्त्यभ्युपगमे घटपटयोः इतरेतराश्रयत्वात् एकासिद्धौ इतरासिद्धेः, तन्निष्ठजात्यसिद्धिः। घटपटयोः जातिं प्रति उपलक्षणत्वात् नैवं-इति चेत्, न; तद्व्यतिरेकेणापि कदाचित् जातिप्रसङ्गात्। दृश्यन्ते हि काकवत्त्वादिकमन्तरेणापि देवदत्तगृहादयः। अनेकवृत्तिमात्रे तुल्यं एतत्-इति चेत्; भवति एवं-न हि किञ्चित् अनेकवृत्ति विना प्रतीतेः वास्तवं इष्यते॥ नापि किञ्चिदत्र व्यञ्जकं प्रमीयते। तद्धि गन्धवत्त्वं वा पाकजरसादिमत्त्वं वा? न आद्यः, जलादौ अपि तद्वत्त्वस्य उक्तत्वात्। न द्वितीयः; अन्यस्य पाकजरसादेः इष्टत्वात्, पाकात् प्राचीने घटादौ तदभावात्, जातीयग्रहणस्य च निरस्तत्वात्। तत्रापि पाकस्य सत्त्वात् तदङ्गीकारे तज्जन्यरसादिमत्त्वस्य निरस्तत्वाविशेषात् अङ्गीकृते तेनैव पृथिवीत्वप्रयुक्तव्यवहारसम्भवात् अपार्थिका तद्भेदेन पृथिवीत्वकल्पना, कल्पनागौरवात्। अतो लाघवात् तन्मात्रमेव पृथिवीत्वं एष्टव्यम्॥ न चात्र प्रमाणं किञ्चित् अवगम्यते, अनुगतप्रत्ययस्य अन्यतो गन्धवत्त्वादेव सम्भवात्। द्रव्यत्वं सत्तातिरिक्तघटपटवृत्तिजातेः भिद्यते, जातित्वात्—इति चेत्, तद्द्रव्यत्वं अनङ्गीकुर्वतां आश्रयासिद्धिध्रौव्यात्, सत्तानङ्गीकारवादे च विशेषणानर्थक्यात्, जातेः घटपटवृत्तित्वनिरासेन च अप्रसिद्धविशेषणत्वात्; स्वरूपासिद्धेश्च। न हि द्रव्यत्वं अनङ्गीकुर्वाणाः तस्य जातित्वं अङ्गीकुर्वते। गोत्वे च विवादाविशेषात् दृष्टान्तस्य आश्रयहीनत्वात्। न हि गोत्वं व्यक्तिमात्रव्यंग्यं अङ्गीकर्तुं युक्तं, सास्नावतः अन्यत्रापि गोत्वव्यक्तिप्रसङ्गात्। न च सास्नावद्व्यक्तिव्यंग्यं गोत्वं इत्यङ्गीकारात् अदोषः, सास्नावत्त्वस्य व्यक्तिमात्रगामित्वे प्राचीनदोषानुषङ्गात्, गोत्वाक्रान्तव्यक्तिनिष्ठत्वे परस्पराश्रयत्वात्।

न द्वितीयः, पृथिवीत्वस्य पृथिवीस्वरूपमात्रत्वे स्वाश्रयप्रसङ्गादेव तस्य तन्निष्ठत्वायोगात् अ(सा?)पेक्षधर्मत्वापत्तेः।

न तृतीयः; जातेः स्वरूपाच्च विलक्षणस्य धर्मस्य औपाधिकत्वेन उपाधेः वक्तव्यत्वात्, तस्य च गन्धवत्त्वादेव निरस्तत्वात्, अन्यस्य च अनिरूपणात्, पृथिवीत्वस्य औपाधिकतायां भावानिष्टत्वाच्च। एतेन अन्योन्याभावस्य व्यवहारयोग्यतायाश्च लक्षणार्थत्वं अपास्तं, भेदे व्यवहारे वा उक्तन्यायस्य अत्रापि

समत्वात् । न च एकः अन्योन्याभावः संभवति, घटपटयोः मिथो व्यावृत्तत्वप्रथामात्रेण जगति सर्वत्र व्यावृत्तत्वप्रथाप्रसङ्गात्, अन्योन्याभावस्य सर्वत्र एकत्वात् । न च प्रत्यक्षयोग्येषु व्यावृत्तत्वप्रत्ययोऽवकल्पते । तत्र धर्म्यप्रतीतेः तदप्रतीतिः इति चेत्, तर्हि कथं अन्योन्याभावस्य एकत्वं, धर्मिप्रतीत्यप्रतीतिभ्यां तन्नानात्वस्य व्यक्तत्वात् । न हि युगपत् एकस्यैव, धर्मी भाति न भाति वा इति, युज्यते । धर्मिभेदात् अविरुद्धे भानाभाने स्यातां इति चेत्, न; तद्भेदस्यैव च अन्योन्याभावभेदाभावे वक्तुं अशक्यत्वात्, तयोः धर्मिभेदाभावभेदयोः एकत्वात्; अनेकत्वेऽपि—व्याप्यव्यापकभावात् । अन्योन्याभावस्य च भेदात्मनः ततोऽन्यस्य वा धर्म्यादिघटितभेदस्य सर्ववस्तुगामित्वे धर्म्यादेः अपि तथात्वेन वस्तुसङ्करासिद्धिः । न चान्योन्याभावानां भेदो युक्तः; तेषां धर्मिप्रतियोगिघटितानां वस्तुस्वरूपत्वे घटान्योन्याभावानां पटादिरूपत्ववत् घटादीनामपि तद्रूपत्वप्रसङ्गात्, सप्रतियोगिकान्योन्याभावानां वस्तुधर्मत्वघटादिधर्मत्वं स्यात् । न च व्यवहारयोग्यता स्वरूपत्वेन धर्मत्वेन वा निरूपयितुं शक्यते; स्वरूपत्वे वस्तुदृष्टौ व्यवहारदृष्टिप्रसङ्गात्, (धर्मत्वे ?) धर्मश्च (धर्म ?) धर्मिणो (:) भेदाभ्यां न शक्यते निरूपयितुं । तस्मात्—न कश्चिदपि लक्षणान्वयोऽस्ति–इति स्थितम् ॥ १३ ॥

यत्तु उच्यते—नित्यानित्यभेदात् द्विविधा पृथिवी, नित्या परमाणुलक्षणा, कार्यलक्षणा च अनित्या, कार्यद्रव्याजन्यं मूर्तं अणु, नित्यमूर्तः परमाणुः, नित्यत्वे सति गन्धवान् पार्थिवपरमाणुः, कार्यद्रव्याजन्यकार्यद्रव्यं द्विगुणं ( द्व्यणुकं ? ), विमतं सावयवं कार्यद्रव्यत्वात् घटवत्, त्र्यणुकं मात्वगवारम्भ महत्त्वे सति कार्यत्वात् कुम्भवत्, उक्तलक्षणं द्व्यणुकं गन्धवत्पार्थिवं, विमतं पृथिवीसमवायिकारणकं कार्यत्वे सति गन्धवत्त्वात् संप्रतिपन्नवत्—इति तत् अयुक्तम् ।

नित्या( नित्य )विभागोऽयं पृथिव्याः न प्रकल्पते ।
अनित्यमात्रनिष्ठं हि पृथिवीत्वं प्रतिष्ठितम् ॥

न हि पृथिव्याः नित्यानित्यविभागः संभवति । पृथिवीत्वं अनित्यमात्रवृत्ति, पृथिवीमात्रवृत्तित्वात्, घटत्ववत्–इति अनुमानसम्भवः स्यात् । न च पृथिवीत्वन्यूनवृत्तित्वं उपाधिः, द्व्यणुकत्वादौ साध्ये सत्यपि, यथोक्तोपाध्यभावेन व्याप्त्यभावात्, घटतटाकान्योन्यत्वे च व्याप्तिभङ्गात् । पृथिवीनिष्ठ-

जातेः अनित्यमात्रवृत्तित्वे पृथिवीत्वन्यूनवृत्तित्वं प्रयोजकं—इति चेत्, न; व्यतिरेके दृष्टान्ताभावात्, अस्मन्मते सत्त्वादेरपि नित्यवृत्तित्वासंप्रतिपत्तेः; पृथिवीनिष्ठजातेश्च अनित्यमात्रवृत्तित्वाभावे पृथिव्यन्याधेयत्वस्य प्रयोजकत्वसंभवात्, तद्व्यतिरेके पूर्वोक्तोपाधिसत्त्वेऽपि परस्परं प्रतिस्पर्धितया द्वयोः आभासत्वात्, द्वितीयेन च आभासीकृतस्य प्रथ(म)स्य उपाधेः तदाभासीकरणासामर्थ्यात्। पृथिवीत्वं नित्यानित्यवृत्ति, कृत्स्नपृथिवीवृत्तित्वात्, सत्तावत्—इति पक्षता—इति चेत्, न; दृष्टान्तस्य साध्यविकलत्वात्, पृथिवीत्वस्य च निरस्तत्वात् आश्रयासिद्धेः; तदा अन्याधेयत्वोपाधेयत्वोपाधेश्च उक्तत्वात्।

यत्तु—कार्यद्रव्याजन्यं मूर्तं अणु—इति तदसत्, अवान्तराणुत्वे परिगृहीते त्र्यणुकादा( व )व्याप्तेः। तत् निरुपपदं अणु न भवतीति चेत्, किं तर्हि तदिष्टं द्व्यणुकं—इति चेत्, न; पृथक्त्वस्य लक्षणकरणात् परमाणौ वाऽतिव्याप्तिः, तस्य कार्यद्रव्याजन्यमूर्तत्वात्॥ कार्यं च सत् असत् वा—दुर्वचनम्॥ द्रव्यं पुनः अधस्तादेव निरस्तम्॥ मूर्तं च किमुच्यते? ( १ ) सर्वगतपरिमाणान्तरपरिमाणवत्—इति चेत्, न; सर्वमूर्तसंयोगित्वे सर्वगतत्वस्य मूर्तसापेक्षत्वात्, तस्य च उक्तपरिमाणवत्त्वस्य इतरसापेक्षतया परस्पराश्रयत्वात्, विधान्तरेण सर्वगते च परिमाणायोगात्, तत्कल्पने च ततोऽन्यपरिमाण( स्य ) वक्ष्यमाणरीत्या वक्तुं अशक्यत्वात्। ( २ ) परिच्छिन्नपरिमाणवत्—इति चेत्, न; परिच्छिन्नत्वं हि भिन्नत्वं वा न्यूनपरिमाणवत्त्वं वा?। न आद्यः, गगनादौ अतिव्याप्तेः। तद्धि अमूर्तमपि भिन्नपरिमाणवत् अभ्युपेयते। न द्वितीयः, असंभवित्वात्। न हि परिमाणस्य न्यूनत्वं नाम परिमाणान्तरं उपप(पा?)द्यते, यद्वत्त्वं मूर्तत्वं स्यात्। ( ३ ) अल्पपरिमाणवत्त्वमेव विवक्षितं—इति चेत्, न; अल्पत्वस्य पूर्ववत् विकल्पासहत्वात्। न हि तुच्छत्वेन अणुत्वेन च अल्पत्वं कल्पयितुं शक्यते; तुच्छत्वस्य असत्त्वे—द्रव्ये तादृक्परिमाणायोगात्, अ(आ?)भासत्वे—तथा(परि)माणस्य विष्टत्वात् असम्भवित्वापातात्; परिच्छिन्नत्वस्य अतिव्यापकत्वात्, इतरस्य च असम्भवित्वात् परिमाणस्य अणुत्वायोगात्। एतेन—नित्यमूर्तः परमाणुः—इति निरस्तम्। मूर्तत्वं व्यक्तिमात्रवृत्ति, मूर्तमात्रवृत्तित्वात्, घटवत्—इति च पूर्ववत् अनुमानप्रवृत्तिसम्भवे (१) नित्यत्वमूर्तयोः व्याघातजः क्रियावान् परमाणुः—इत्यपि न, पूर्ववत् अजत्वक्रियावत्त्वयोः विप्रतिषेधात्। (२) यतः परं न विभागः स परमाणुः—इत्यपि न, गगनादौ व्यभिचारात्, तस्मात् परस्मादपि विभागाभा-

वात्। 'यतः' इति अणुपरिमाणग्रहणात् न—इति चेत्, न; तस्य पूर्ववत् निराकर्तुं शक्यत्वात्, परिमाणत्वस्य परिमाणान्तरस्य दुर्वचत्वात्। (३) परिमाणापकर्षतारतम्यविश्रान्तिभूमिः—इति चेत्, न; तस्य त्र्यणुके विश्रान्तिसम्भवात्। तस्य सावय( वा )रब्धत्वात् न—इति चेत्, न; अनाद्यनिर्वाच्याज्ञानस्यैव तथातथा विवर्तमानस्य तथाविधविवर्ताभ्युपगमात्। आरम्भवादश्च अग्रे निराकरिष्यते॥ पृथिव्याः नित्यत्वे निराकृते, नित्यत्वे सति—इत्यादि पार्थिवपरमाणुलक्षणमपि पराकृतम्। द्व्यणुकलक्षणे तु कार्यद्रव्याजन्य—इत्यत्र, कार्यद्रव्यशब्देन द्व्यणुकविवक्षायां आत्माश्रयत्वं, त्र्यणुकादिविवक्षायां त्र्यणुकादौ अतिव्याप्तिः। तावन्मात्राभिप्राये तु तदजन्यत्वस्य परमाणौ अपि भावात् तद्व्यावृत्त्यर्थं—कार्यद्रव्यविशेषणं—इत्युक्तम्; परमाणोरद्यापि सिद्धत्वात्, कार्यत्वद्रव्यत्वयोश्च दुर्निरूपत्वात्, स्वोदीरितत्वात्।

यत्तु—विमतं सावयवं, कार्यद्रव्यत्वात्–इति, तत्र द्व्यणुकाद(द्य?) सिद्धेः आश्रयासिद्धिः, हेतुसाध्ययोश्च अर्थभेदानुपपत्तेः साध्याविशिष्टत्वम्। त्र्यणुकं सावयवारब्धं, महत्त्वे सति कार्यत्वात्—इति द्व्यणुकसिद्धिः—इति चेत्, न; तस्य सावयवारब्धत्वासम्भवस्य उक्तत्वात्। 'महत्त्वे सति' इति च अनर्थकम्। शब्दादिव्यावृत्त्यर्थमिति चेत्, न; तस्य परिमाणवत्त्वेनैव व्यावृत्तिसम्भवे तद्विशेषत्वो(णो?)क्तेः आनर्थक्यात्। द्व्यणुकव्यवच्छेदार्थमिति चेत्, न; स्वाश्रयत्वात्। तत् वा सावयवारब्धं, कार्यद्रव्यत्वात्—इति किं नानुमीयते ? अवयवपरम्पराविश्रान्तिप्रसङ्गादिति चेत्, न; तदारम्भकस्य निरवयवत्वसम्भवात्। स एव तर्हि परमाणुः—इति चेत्, न; तस्य अमूर्तत्वाभ्युपगमात्॥

विमतं न्यूनपरिमाणकारणकं, कार्यद्रव्यत्वात्, पटवत्—इति चेत्, न; महापरिमाणदुकूलद्वयारब्धरज्जुद्रव्ये व्यभिचारात्। तत्र कार्यद्रव्यत्वाभावे पटादौ अपि तदसत्त्वं तुल्यं, अन्त्यावयवित्वात् द्रव्यानारम्भकत्वं अध्यक्षविरुद्धम्। अयं घट एतद्घटेतरानित्यमूर्तेतरमूर्तान्यः, कार्यत्वात्, घटान्तरवत्–इति चेत्, न; अयं घट एतद्घटेतरानित्यसावयवेतरसावयवान्यः, कार्यत्वात्—इति आभाससमानत्वात्॥ नित्यं सावयवं क्वापि नोपलब्धमिति चेत्, मूर्तं च अनित्यं क्व उपलभ्यते। न च परमाणोः संयोगिनो निरवयवत्वं, प्रदेशवृत्तेः संयोगस्य निरवयवेऽनुपपत्तेः, मनसोऽन्नमयत्वेन सावयवत्त्वात्, आत्मादेश्च पक्षतुल्यत्वात्,—संयोगित्वं अनित्यमात्रवृत्ति, संयोगिमात्रवृत्तित्वात्, घटत्व-

वत्—इति च अनुमानात्, संयोगित्वन्यूनवृत्तित्वोपाधेश्च पूर्ववत् निरस्यत्वात्। पार्थिवद्व्यणुकलक्षणं च द्व्यणुकलक्षणनिराकरणादेव निराकृतम् ॥

यत्तु—विमतं पृथिवीसमवायिकारणकं, कार्यत्वे सति गन्धवत्त्वात्–इति तत् असत्, अम्भोनभस्वदादौ व्यभिचारात्। किञ्च, कार्यं अभूत्वा भावि—इति चेत्, किं अभवनं असत्त्वं, किं वा भवनं अभिव्यक्तिः ? न आद्यः, वन्ध्यासुतवत् असत(त्त्व)स्य (स)त्त्वायोगात्, भावित्वायोगात् भावित्वासम्प्रतिपत्तौ भूतासत्त्वस्य आत्यन्तिकत्वात्। न द्वितीयः, नभस्वदादौ अभिव्यक्तेः अनादित्वेऽपि तद्विरोध्यभिव्यक्तेः सदित(सादि?)त्वात् (प्रा)क् तस्याः सत्त्वासम्भवात्। अनधीनात्मलाभं कार्यं—इति चेत्, न; अलब्धात्मलाभस्य अन्याधीनत्वानुपपत्त्या परास्पराश्रयप्रसङ्गात्। एतेन कारणाधीनात्मलाभं कार्यं—इति निरस्तं, कार्यासिद्धौ तन्निरूप्यकारणासिद्धेः तदसिद्धौ च तदधीनात्मलाभस्य कार्यस्य असिद्धेः ॥

यत्तु–पार्थिवं कार्यं शरीरेन्द्रियविषयभेदात् त्रिविधं–इति, तत्र शरीरं आत्मनोऽवच्छेदकतया भोगसाधनं अन्त्यावयवि इति अयुक्तम्।

तदवच्छेदकत्वं वा भोगसाधनताऽपि वा।
त्रिधा द्विधा वा ना सिध्येन्न वाऽवयविसम्भवः ॥
चक्षुरादिष्वतिव्याप्तेर्देहे च तदसङ्गतेः।
न हि चेतनताहीने देहे भोगोऽवकल्पते ॥

तदवच्छेदकत्वं हि—तद्व्यावर्तकत्वं वा, तदुपलब्धिस्थानत्वं वा, तत्प्रतिबिम्बाधारत्वं वा ? सर्वथाऽपि चक्षुरादौ अतिव्याप्तिः, अहंप्र(त्य)यालम्बनत्वेन तस्यापि तद्व्यावर्तकत्वात्, तदुपलब्धिस्थानतायाः तत्प्रतिबिम्बाधारतायाश्च "य एषोऽक्षिणि पुरुषो दृश्यते" इत्यादिश्रुतिसिद्धत्वात् ॥ किञ्च भोगसाधनत्वं–तत्कारणत्वं वा, तदायतनत्वं वा ? आद्ये स एव दोषः, चक्षुरादेरपि शरीरवत् भोगकारणत्वस्य दुर्निवारत्वात्। द्वितीये तु असम्भवित्वम्, कर्मफलसाक्षात्कारलक्षणभोगस्य अचेतनाश्रयतानाश्रयणात् ॥ एतेन भोगकरणत्वं निराकरणीयम् ॥

कश्च अन्त्योऽवयवी ?(१)कार्यद्रव्यत्वे सति कार्यद्रव्यानारम्भक–इति चेत्, न; प्रत्युत्पन्नप्रध्वस्ते खण्डावयवि(नि) अतिव्याप्तेः। (२)वर्तमानत्वेन अपि विशेषणीयं—इति चेत्, न; भूते भाविनि च अन्त्यावयविनि अव्याप्तेः, दुकूला-

देश्च तथात्वेन इष्टस्य रज्ज्वाद्यारम्भकत्वात्, तस्य अनव(य)वित्वे च अतिप्रसङ्गात्। दुकूलादेः अन्त्यावयवित्वाभावे च अविशेषात् पटादेः अपि तत् न स्यात् ।

कश्च अवयवी? स्पर्शवत् कार्यं—इति चेत्, न; अनुष्णाशीतापाकजस्पर्शवत्त्वस्य वायोः अन्यत्र, उष्णस्पर्शवत्त्वस्य तेजोव्यतिरिक्ते, शीतस्पर्शवत्त्वस्य अम्भोतिरिक्ते, पाकजस्पर्शवत्त्वस्य च अन्यत्र पृथिव्याः, वक्तुं अशक्यत्वात्—क्वचिदपि स्पर्शमात्राधारत्वस्य दुःसंपादत्वात्; विशेषवत्त्वस्यैव तत्र अदर्शनात्, तत्सामान्यस्य तन्निष्ठत्वे तद्व्ये(अ)भावात्। न हि स्पर्शव्यक्त(क्तौ?)स्पर्शसामान्यं हित्वा स्पर्शमात्रं नाम किञ्चित् उपलभ्यते ॥ न च अवयविनि मानम्। स्थूलविकल्पः बाह्ये प्रमा, प्रमात्वात्, रूपदर्शनवत्—इति चेत्, न; तदनङ्गीकारवादिनः तस्मिन् प्रमात्वस्य असिद्धत्वात्, वृत्तिविकल्पबाधात् च । प्रत्यक्षविरोधात् न—इति चेत्, तर्हि तेनैव अवयविसिद्धेः वृथा अनुमानकथा । तस्य च असत्त्वसम्भवात् न साधकत्वं बाधकत्वं वा। न हि हेत्वसिद्धयादिना स्वयं आभासीभूतं अनुमानं अवयविनः साधकं बाधकं वा कस्यचित् उपपद्यते ॥

एतेन-(१) अवयवित्वे सति आत्मावच्छेदकत्वं शरीरं—इति व्याख्यातम्। (२) व्याप्त्या स्पर्शनयोगि शरीरं—इत्यपि न, व्याप्तेः संयोगित्वे चक्षुरादौ अतिव्याप्तेः, तस्य संयोगेन तद्योगित्वात्। (३) कात्स्न्येंन तत्संयोगित्वं विवक्षितं—इति चेत्, न; विभुनि द्रव्ये अतिव्याप्तेः। सर्वत्र तन्मात्रयोगित्वं—शरीरेऽपि न सम्भवति, द्रव्यान्तरयोगस्यापि दुर्वारत्वात्। न हि शरीरस्य स्वात्मनि स्पर्शनमात्रेण सर्वत्र संयोगित्वं, अन्येनापि संयोगित्वस्य अवर्जनीयत्वात्। (४) समवायेन तद्योगित्वं—अपि तादृगेव। न हि देहस्य स्पर्शनेन कार्यकारणत्वादिहीनस्य समवायः सम्भाव्यते। (५) तादात्म्यं तु—भिन्नत्वे स्थिते अस्थिते च कुतः सिध्येत्; आद्ये-निरोधात्, द्वितीये तु-अन्यतरपरिशेषात्। स्पर्शनं च त्वगिन्द्रियं उच्यते। तच्च इन्द्रियासिद्धौ न सिध्यति, तद्विशेषत्वात्। इन्द्रियं च शरीरसिद्धौ सिध्येत्। तत्संयुक्तत्वाभ्युपगमाद(द्)तच्छरीरसिद्धौ तत्संयुक्तेन्द्रियसिद्ध्या तद्विशेषस्पर्शनस्य सिद्धिः, तत्सिद्धौ च व्याप्त्या तद्योगिनः शरीरस्य सिद्धिः, इति कथं न परस्पराश्रयत्वम्। उक्तोपाध्यसिद्धौ कथं शरीरसंज्ञा इति चेत्, गवादिसंज्ञावत् जातिवशात् इति ब्रूमः। पृथिवीत्वेन परापरभावात् न शरीरत्वं जातिः—इति चेत्, तर्हि भूतत्वमूर्तत्वयोरिव द्वयोः अजातित्वं अस्तु। पृथिवीत्वस्य अजातित्वे चतुष्ट-

यबाधः स्यात्—इति चेत्, न; तद्बाधेऽपि गन्धवत्त्वस्नेहवत्त्वादिना तत्तत्संज्ञाप्रवृत्त्युपपत्तेः। पृथिवीत्वेन तुल्ययोगक्षेमत्वे शरीरत्वस्य व्यञ्जकं वक्तव्यं—इति चेत्, न; लक्षणस्यैव तथात्वात् तस्य (त)द्भावितत्वेऽपि यथाप्रतीति तथाभावसम्भवात्; तेनैव संज्ञाप्रवृत्तौ तु व्यञ्जकेनैव पृथिव्यादिसंज्ञाप्रवृत्तिः अपि इति तुल्यम्। एतेन इन्द्रियत्वमपि तच्छब्दप्रवृत्तिनिमित्तं उक्तं वेदितव्यं, तस्यापि पृथिवीत्वादिना तुल्यत्वात्। उक्तन्यायग्रस्ततया—तदेव गन्धवत् पार्थिवं—इत्यपि परास्तम्। न हि शरीरस्यैव असिद्धौ पार्थिवत्वविशेषितं तत् उपपद्यते। न च अस्य पृथिवीमात्रारब्धत्वं, पञ्चभूतकार्योपलब्ध्या तदारब्धतासिद्धेः। प्रत्यक्षारब्धस्य अप्रत्यक्षता स्यात् इति चेत्, न; भूगोलकादौ व्यभिचारात्। भवता च पार्थिवावयवानां स्नेहात् इत(र)देहारम्भे भूतान्तरावयवानां उपष्टम्भकत्ववाचोयुक्त्या प्रत्यक्षारब्धत्वं अस्य अभ्युपेयते। त्रिवृत्करणश्रुतिश्च भूतत्रयसर्गश्रुतौ अपि पञ्चीकरणं उपलक्षयन्ती पञ्चभूतारब्धत्वमेव भौतिकस्य जगतो मन्यते।

यत्तु—पार्थिवं शरीरं योनिजं अयोनिजं चेति द्विविधं—इति—तत् असत्।

अयोनिज(शरीर)स्य न हि सम्भावना भवेत्।
कारणव्यतिरेकेण कार्यं न क्वापि दृश्यते ॥

कारणं हि योनिशब्दार्थः, तदभावे कथं कार्यं, अकारणस्य तस्य अनुपपत्तेः। शुक्रशोणितसन्निपातो योनिः—इति चेत्, न; तत्र योनिशब्दस्य अप्रसिद्धत्वात्, कारणस्थानविशेषे च तत्प्रसिद्धेः। तस्यापि कारणत्वात् तच्छब्दता—इति चेत्, तर्हि तज्जन्यत्वाभावेऽपि न अयोनिजत्वं, कारणाधीनजन्मवत्त्वादेव योनिजत्वस्य आवश्यकत्वात्। तथापि, किञ्चित् तज्जन्यं किञ्चित् न इति अवान्तरभेदः स्यात्—इति चेत्, तर्हि भूयसां तद्भेदानां सम्भवात् न द्वैविध्यसिद्धिः। एतेन—अस्मदादिशरीरसन्ततिः अयोनिजा वर्तते, शरीरसन्ततित्वात्, गोमयादिजनितवृश्चिकादिशरीरसन्ततिवत्—इति निरस्तं; अयोनिजशब्दार्थस्य प्रागुक्तन्यायेन वक्तुमशक्यत्वात्, शरीरत्वेन च विप्रतिपन्नं प्रति योनिजत्वानुमानात्, आगमस्य शुक्रशोणितसन्निपाताजन्यतामात्रपरत्वात्, वृश्चिकादिशरीस्यापि पक्षत्वेन पक्षतुल्यत्वेन वा व्यभिचारात् उदाहरणत्वाभावात्।

पूर्वोक्तेन विभागेन विभागोक्तिर्यदीष्यते।
तथापि नैव सा मुख्या मुख्या योनिजता स्थिता ॥

तस्मात्—योनिजं एव पार्थिवं शरीरं—इति स्थितम् ॥ (१४) ॥

( १ ) शरीरसंयुक्तं अतीन्द्रियं साक्षात्प्रतीतिसाधनं इन्द्रियं-इति अ-(यु)क्तम्।

असम्भवादतिव्याप्तेर्वैयर्थ्यात् तत्प्रवृत्तितः।
परस्पराश्रयत्वाच्च कथमिन्द्रियमीदृशम् ॥

त्वन्मते सर्वस्य योगीन्द्रियग्राह्यत्वेन अतीन्द्रियासिद्धौ असम्भवित्वात् न उक्तं इन्द्रियं सिध्यति। गुरुत्वादिवत् तत्सिद्धौ अपि-परस्पराश्रयत्वात् असम्भवित्वतादवस्थ्यम्। साधने च-कारणकालादौ अतिव्याप्तिः, तस्य इन्द्रियत्वाभावेऽपि प्रतीतिकारणत्वस्वीकरणात्। करणे तु-साक्षात्प्रतीतिकरणमित्येतावतैव अभीष्टसिद्धौ इतरवैयर्थ्यात् तद्विशिष्टलक्षणासिद्धिः। शरीरनिर्वचनस्य च निरस्तत्वात् कुतः शरीरसंयुक्तमिति विशेषणं सिध्यति। (२) प्रत्यक्षप्रमित्यनालम्बनं भौतिकं इन्द्रियं-इत्यपि न; पार्थिवपरमाणुरूपादौ अतिव्याप्तेः; (३) द्रव्यत्वेन विशेषणेऽपि—द्व्यणुके तद्भावात्; (४) साक्षात्प्रतीतिसाधनत्वेनापि विशेषणे भौतिकादिविशेषणवैयर्थ्यात्; (५) तन्मात्रोक्तौ च—साधनस्य करणत्वे—पूर्ववत् अतिव्याप्तेः, अकरणत्वे च-कारणनिराकरणादेव त-(द)शेषस्यापि निराकरणात् असम्भवित्वात्। (६) ईश्वरप्रत्यक्षविषयत्वेन च विशिष्टं—लक्षणं असम्भवि भवेत्। (७) अस्मदादिविशेषणे च—साक्षिणं अङ्गीकुर्वतां असम्भवित्वतादवस्थ्यम्। (८) अस्मदाद्यैन्द्रियकप्रमित्यविषयत्वविवक्षायां-अहं इन्द्रियं जानामि इत्यनुव्यवसायविषयत्वेन उक्तदोषाविशेषः। (९) तदितरैन्द्रियकप्रमित्यविषयत्वाभिधाने च—अन्योन्याश्रयत्वं,-इन्द्रियसिद्धौ अस्मादाद्यैन्द्रियकप्रमित्यविषयत्वविशिष्टलक्षणसिद्धिः, ततश्च इन्द्रियसिद्धिरिति। एतेन (१०) अज्ञातकरणं इन्द्रियं—इति प्रत्युक्तं, अज्ञातत्वस्य दुर्ज्ञानत्वात्। तत्र तच्छब्दप्रवृत्तिश्च शरीरे तच्छब्दप्रवृत्तिवत् उपपद्यते ॥

तदेव (१) गन्धवत् पार्थिवं (घ्राणं) —इत्यपि न, सामान्यनिराकरणादेव तन्निराकरणात्, तत्र गन्धवत्त्वपार्थिवत्वयोश्च परस्पराश्रयत्वात्। (२) रूपादिषु गन्धस्यैव व्यञ्जकं इन्द्रियं घ्राणं—इत्यपि न, इन्द्रियविशेषणेन क्षारीकृतत्वात्, तदभावे तथाविधादृष्टादौ अतिव्याप्तेः। एवं (३) गन्धवत् इन्द्रियं घ्राणं—इत्यपि निरसनीयं, सामान्यनिरासेन विशेषनिरासस्य उक्तत्वात् ॥

यत्तु-गन्धोपलब्धिः करण(कार्या), कार्यत्वात्, घटवत्-इति सामान्येन कारणसिद्धौ परिशेषतो घ्राणसिद्धिः इति—तत् असत्।

अन्वयव्यतिरेकाभ्यां तद्धेतोर्घ्राणतागतेः ।
सामान्यपरिशेषौ तु न किञ्चित्कर्तुमर्हतः ॥

तथाहि, सति यस्मिन् गन्धोपलब्धिः उपपद्यते, यस्मिंश्च असति न असौ भवति तत् इन्द्रियं गन्धोपलब्धिसाधनं घ्राणं,—इत्यन्वयव्यतिरेकाभ्यां गन्धोपलब्धिहेतोः इन्द्रियस्य बाह्यस्य घ्राणत्वसिद्धौ सामान्यानुमानपरिशेषयोः अकिञ्चित्करत्वात् न तौ अपेक्षते ॥ यदपि विमतं पार्थिवं, रूपगन्धयोः गन्धस्यैव व्यञ्जकद्रव्यत्वात्, कुङ्कुमगन्धव्यञ्जकघृतवत्—इति, तदपि न; हेतुविशेषणवैयर्थ्यात् । असिद्धिपरिहारार्थं विशेषणं इति चेत्, न; हेतुविशेषणस्य व्यभिचारनिवृत्त्यर्थत्वाङ्गीकारे विरोधात्, उक्तहेतोश्च इन्द्रियत्वकृतत्वात् अन्वयव्यतिरेकसिद्धत्वेऽपि प्रागेव घ्राणस्य पार्थिवत्वावगतेः आवश्यकत्वात् इतरेतराश्रयत्वेन असिद्धेः दुरुत्तरत्वात्, सामान्येन तन्निर्देशेऽपि तदाश्रयविशेषसिद्धौ ध्रौव्यात् । न च तस्मिन् 'घ्राणं' इति संज्ञा नियामकाभावात् प्रसिद्धा । तन्नियमे तथैव तत्सिद्धेः अनुमानवैयर्थ्यम् ॥

कश्च विषयः? न तावत् (१) प्रतीयमानः तथा—इति तत्सामान्यलक्षणं; प्रतीतिं प्रति विषयतया वर्तमानोक्तौ—आत्माश्रयत्वप्रसङ्गात्, प्रतीतिसंबन्धित्वोक्तौ—घटज्ञाने घटवत् चक्षुरादेरपि विषयत्वापत्तेः, फलकरणाश्रयातिरिक्तत्वे सति तत्संबन्धित्ववचने—पूर्ववत् आत्माश्रयत्वात् । (२) ज्ञानजन्यफलाधारो विषयः—इत्यपि न; ज्ञाततारव्यफलस्य अजडत्वे—अर्थगामित्वायोगात्, जडत्वे—अकिञ्चित्करत्वात्, व्यवहारस्य च हानादेः तदाश्रयत्वाभावेन अविषयत्वप्रसङ्गात् । (३) शरीरेन्द्रियव्यतिरिक्तः अवयवी भौतिको विषयः—इत्यपि न; भौतिकविशेषणस्य अनर्थकत्वात्, स्वरूपावाचिनश्च शब्दस्य लक्षणे निवेशायोगात्, भूतानां अपि विषयत्वाङ्गीकारात्; भौतिकशब्दस्य कार्यवाचित्वेऽपि दोषसाम्यात्, अवयविशब्दस्यापि भौतिकाङ्गीकारात् भौतिकशब्दस्य अ(वयवि)—शब्दस्य तुल्यत्वात्, अवयविनो निरस्तत्वात्, शरीरेन्द्रिययोश्च तथात्वात् व्यतिरिक्तत्वविशेषणायोगात् ॥

एतेन—स एव गन्धवान् पार्थिवः—इति निरस्तम् ।

ज्ञातता व्यवहारो वा फलं नैवोपपद्यते ।
अपा(र्थका)दिदुष्टत्वात् विषयश्च न निश्चितः ॥

तस्मात्—पृथिव्याः लक्षणप्रमाणयोः अभावात् तदवान्तरभेदस्य च असम्भवात् प्रतीतिमात्रसिद्धत्वं आस्थेयम् ॥

तत्तदुक्तेरयुक्तत्वात् पृथिवीति प्रथा कथम् ॥
अनिर्वक्तव्यतापक्षे प्रविष्टा प्रकृतिं गता ॥ १५ ॥
अपामस्त्वं न वैधर्म्यं लक्षणं वा प्रकल्पते ।
पृथिवीत्वेन तुल्यत्वात् न चान्यदपि युज्यते ॥

न खलु, (१) अस्त्वं अपां वैधर्म्यं लक्षणं वा । तद्धि गन्धवदवृत्ति स्नेहव्यापकसामान्यं इष्टम् । न च गन्धवदवृत्तित्वं सम्भवति–इत्युक्तम् । नापि तदवष्टम्भेन व्यतिरेकी निर्वहति, पूर्ववत् तदपाक(र)णात् । न च ( २ ) शुक्लरूपवत्त्वं (३) मधुररस(व)त्त्वं (४) शीतस्पर्शवत्त्वं वा तल्लक्षणं; तेजसि पृथिव्येकदेशे च शुक्लस्य रूपस्य दर्शनात्, इक्षुक्षीरगुडादिषु क्षितिभागेष्वेव मधुरस्यापि रसस्य उपलम्भात्, शीतस्पर्शस्य च वाय्वादौ बहुलं उपलब्धेः; अपाकजत्वविशेषणेऽपि–पाकात् प्राचीने क्षितिभागे–व्यभिचारतादवस्थ्यात्, तत्र च पाकेऽपि—तज्जन्यताया निरस्तत्वात्, अपाकजशुक्लरूपादेश्च ज्वलनादौ सत्त्वात् ।

न च स्नेहादि तदुक्तं घृतादौ व्यभिचारतः ।
प्रतीतेरपि मुख्यत्वमन्योन्याश्रयताऽन्यथा ॥

( ५ ) स्नेहवत्त्वं ( ६ ) सांसिद्धिकद्रवत्वाधारवत्त्वं वा तल्लक्षणं–इत्यपि न, घृततैलादिषु अतिव्याप्तेः व्यक्तत्वात् । पार्थिवेष्वेव घृतादिषु आरम्भकावयवानां स्नेहादिमदम्भोऽवयवोपष्टम्भात् तेषु संयुक्तसमवायेन स्नेहादिप्रतीतिः—इति चेत्, न; तत्र स्नेहादिप्रतीतेः मुख्यत्वेऽपि बाधाभावात् यथोक्तकल्पनाया निरवकाशत्वात् । स्नेहोऽम्भसि एव–इत्यादिसिद्धान्तविरोधात् एषा कल्पना इति चेत्, न; घृतादौ स्नेहादिप्रतीतेः अन्यथासिद्धौ सिद्धान्तसिद्धिः तत्सिद्धौ च तदन्यथासिद्धिः इति अन्योन्याश्रयात् ।

नित्यानित्यभेदात् अपां द्वैविध्यं, शरीरेन्द्रियविषयभेदात् कार्यत्रैविध्यं च, पूर्ववत् निरसनीयम् । न च तदीयं शरीरं अयोनिजमेव इति विशेषः, तस्य पृथिव्यधिकारे निरस्तत्वात् । गुणेषु रसस्यैव व्यञ्जकं इन्द्रियं रसनं, मधुररसवदिन्द्रियं वा; रसव्यक्तिः करणकार्या, कार्यत्वात्, घटवत्—इति लक्षणप्रमाणे पूर्ववत् प्रतिनेतव्ये ॥ रूपरसयोः रसस्यैव व्यञ्जकद्रव्यत्वं, रसनस्य आस्योदकवत् आप्यत्वसाधनं विशेषणानुपपत्त्या दूषणीयम् ॥ उक्तविकारद्वयातिरिक्तोऽवयवी शीतवान् आप्यो विषय इति च विकारद्वयानिरुक्तेः अवयविनिराकरणात् च निराकरणीयम् ॥

आपोऽपि तुल्यन्यायत्वात् पृथिव्या सह सङ्गताः ।
अनिर्वाच्यत्वसमयं समाश्रित्य समासते ॥ १६ ॥
तेजस्त्वमस्ववन्नेव तेजसो लक्षणं भवेत् ।
अतिव्याप्तेस्तथाऽव्याप्तेर्न चान्यदिह लक्षणम् ॥

न तावत् (१) (तेजस्त्वं) तेजसो लक्षणं, अस्वादिवत् तन्निरसनस्य सुशकत्वात् ।

तन्मात्रे तत्प्रथायां च तत्प्रथा सर्वतो भवेत् ।
तद्विशिष्टे तदिष्टं चेदिष्टा स्वस्कन्धवृत्तिता ॥

किं हि तेजस्त्वं व्यक्तिमात्रे वा तेजस्त्वावच्छिन्नव्यक्तौ वा तिष्ठति—इति वक्तव्यम् । न आद्यः, सर्वत्र तद्वृत्ति(त्व)प्रसङ्गात् । यदा हि तेजस्त्वं व्यक्तिमात्रगतं अङ्गीकृतं तदा—न किञ्चित् अतेजोऽस्ति—इति आपत्तिः आपद्यते । न द्वितीयः, स्वाश्रयापातात्; तेजस्त्वावच्छिन्ने विशेषतेजस्त्वस्य अवस्थाने कथं अंशतः स्वाश्रयत्वं न स्या(त्) । न च—इदं धर्ममात्रे निरङ्कुशं—इति शङ्कितव्यं, अभ्युपगतत्वात् । अभ्युपगम्यते हि धर्मधर्मिभावशून्यं निर्विशेषं अखण्डैकरसं सच्चिदानन्दैकतानं तत्त्वम् ।

नापि (२) शुक्लभास्वररूपवत्त्वं तल्लक्षणं, विशेषणवैयर्थ्यात्, स्वरूपपरस्य तस्य लक्षणानन्तर्भावात्, भास्वरत्वस्य च स्वरूपावान्तरजातित्वे व्यञ्जकाभावात्, रूपान्तरप्रकाशकत्वस्य सुवर्णादिरूपा(दाव)भावात् । न च द्रव्यान्तरसम्पर्कात् तदीयरूपस्य अप्रकाशकत्वं, नियामकाभावात् । तेजसो भा(स्व)रस्वरूपवत्त्वाव्यभिचारात् एवं—इति चेत्, न; प्रकृते व्यभिचारस्य स्फुटत्वात्; तत्रापि तेजस्त्वेन तद्वत्तानुमाने प्रत्यक्षविरोधात्, इतरेतराश्रयाच्च, शुक्लभास्वररूपवतः स्फटिकादेः अतैजसत्वाच्च, तत्र तेजोवयवानुप्रवेशस्य पूर्ववत् प्रतिविधेयत्वात् । नहि स्फटिकादौ शुक्लभास्वररूपप्रतिभानस्य मुख्यत्वसम्भवे गौणत्वकल्पना कल्पते । न च (३) उष्णस्पर्शवत्त्वं तल्लक्षणं, त्वन्मते चन्द्रमसि अव्याप्तेः । सोऽपि तेजस्त्वात् दर्शितस्पर्शवान्, अग्निवत्—इति चेत्, न; शैत्योपलब्धिविरोधात्, पञ्चाग्निविद्याधिकारे च चन्द्रस्य आप्यत्वनिश्चयात् तेजस्त्वासिद्धेः । प्रसिद्धिस्तु शैत्योपलब्ध्यनुगृहीतश्रुतिविरोधात् आभासीभवति । न च उपष्टम्भकभागावष्टम्भात् तदुपलब्धिः, तटाकादिष्वपि तथाप्रसङ्गात् ।

तेजसोऽपि द्वैविध्यं कार्यत्रैविध्यं च पूर्ववत् प्रतिविधेयम् । नहि तैजसं शरीरं सूर्यलोकस्थं अयोनिजं उपपद्यते, प्राचीनन्यायेन तदयोनिजत्वस्य दुर्वचत्वात् ।

यत्तु—चक्षुः तैजसं, रूपस्पर्शयो रूपस्यैव व्यञ्जकद्रव्यत्वात्, दीपवत्—इति तत् असत्, रसनाद्यधिकारे विशेषणवैयर्थ्यस्य उक्तत्वात्। स्पर्शाग्राहकत्वे सति रूपग्राहकत्वं विवक्षितं—इति चेत्, न; तथाविधादृष्टस्यापि संभावनोपनीतत्वेन व्यभिचारात्। द्रव्यत्वेन विशेषणात्—इदं अदूषणं इति चेत्, न; तथाविधकालक्षणे व्यभिचारतादवस्थ्यात्। रूपग्राहकत्वं तद्ग्रहणासाधारणकारणत्वं इष्टं—इति चेत्, न; तत्रैव भावात् तस्य तत्रैव कारणस्य च असिद्धत्वात्। द्रव्यादिग्रहेऽपि तस्य कारणत्वात् तत्रैव कारणत्वविवक्षायां अपि तुल्यो दोषः। न हि रूपग्रहणमात्रे करणत्वं चक्षुषो युक्तं; रूपिग्रहणे सङ्ख्यादिग्रहणे च तस्य करणविशेषात् चक्षूरूपसन्निकर्षेण व्यभिचारात्, तस्य स्पर्शाग्राहकत्वे सति रूपग्रहणे करणत्वात्, अतैजसत्वाच्च। न तस्य करणत्वं तद्व्यापारत्वात्—इति चेत्, तथाऽपि कारणे निर्वक्तुमशक्ये तद्विशेषस्य करणसिद्धेः असिद्धिः, तमोविरोधित्वोपाधेश्च सत्त्वात् व्याप्यत्वासिद्धिः। न च साधनव्याप्तिः, चक्षुषः तद्ग्राहकत्वेन तदविरोधित्वात्। न च सुवर्णादौ साध्याव्याप्तिः, तत्तैजसत्वाभावस्य वक्ष्यमाणत्वात्। न च अस्मन्मते समव्याप्तौ चन्द्रमसि व्याप्त्यभावः। त्वन्मतानुरोधेन उक्तव्याप्तिसम्भवात्—विमतं अतैजसं, अतमोविरोधित्वात्, घटवत्—इति व्यतिरेकसिद्धिः। भस्मच्छन्नेऽपि वह्नौ तद्विरोधित्वात्यन्ताभावानधिकरणत्वात् न व्यभिचारः, सुवर्णादौ तु पूर्ववत् तत्प्रतिविधानात्। न च अप्रकाशकत्वं उपाधिः, स्फटिकादौ व्याप्त्यभावात्, व्यतिरेकानुमाने च तत्रैव व्यभिचारात्, उक्तोपाधेश्च सत्त्वात्, परस्परोपाधेः निरस्तत्वात्। तैजसत्वं एव निषिध्यते चक्षुषः, तेजोमात्रारभ्यत्वानभ्युपगमात्; न तैजसत्वं तस्य निषेध्यं, भूतान्तरोपष्टब्धतेजोजन्यत्वाङ्गीकारात्।

यत्पुनः—विषयरूपं तेजः चतुर्विधं भौमं दिव्यं औदर्यं आकरजं च इति—तत् अयुक्तम्—

तद्भेदस्यानिमित्तत्वात्, तद्भेदात् (तु) भिदा यदि।
निमित्तभेदभूयस्त्वात् तद्भूयस्त्वं तदापतेत्॥

न हि विषयरूपे तेजसि चातुर्विध्यं नियन्तुं शक्यं, नियामकाभावात्। कारणभेदात् तथाभेदे—तृणारणिमणिप्रभृतीनां कारणानां बहुलं उपलम्भात् न चातुर्विध्ये पर्यवसानम्। न च आकरजं सुवर्णरजतताम्रादि तैजसं; विमतं पार्थिवं, नैमित्तिकद्रवत्वात्, मधूच्छिष्टवत्—इति अनुमानात्। अपार्थिवत्वे

तु अम्भोवत् तथाविधद्रवत्वासिद्धिः। न च गन्ध(व)त्त्वमुपाधिः, ताम्रादौ अपि तदुपलम्भात् उपष्टम्भकभागाधीनत्वस्यैव तत्रापि सुवचत्वात्। न च–विमतं पार्थिवं, पाकानिर्वर्त्यरूपत्वात्, तोयवत्–इति वाच्यं, तदनिर्वर्त्यरूपगुणवत्त्वस्य असिद्धत्वात्, पाकात् पूर्वोत्तरकालयोः रूपभेदस्य सुवर्णादौ अतिस्फुटत्वात्, मलविगममात्रकल्पनस्य घटादौ अपि तुल्यत्वेन व्यभिचारात्, तदतिरेकेण रूपनाशोत्पत्तिदृष्टिरपि तुल्या; तदनिर्वर्त्यस्वरूपत्वे च दोषसाम्यात्। न हि पाकेन घटादेः स्वरूपं निर्वर्त्यते। दृष्टान्तस्य च साधनविकलत्वं, अत्यन्ताग्निसंयोगे तस्यापि विनाशदर्शनात्। एतेन–विमता न पार्थिवाः, पाकानिर्वर्त्यरूपवत्त्वात्, तोयपरमाणुवत्–इति व्याख्यातं; प्राचीनन्यायेन हेतोर्दुर्वचत्वात्। न च–विमतं तैजसं, असांसिद्धिकद्रवत्वे सति जात्युपाधौ एकविधरूपवत्त्वात्, दीपवत्–इति वाच्यं, नैमित्तिकद्रवत्वाधिकरणत्वस्य विशेषणत्वे दृष्टान्तस्य साधनविकलत्वात्। न हि प्रदीपस्य नैमित्तिकद्रवत्वाभावात् तत्र विशिष्टो हेतुः एष्टुं शक्यते; स्वाभाविकद्रवत्वानधिकरणत्वस्य तथात्वेऽपि घटादौ इव जात्युपाधौ एकविधरूपवत्त्वस्य धर्मिणि अभावात्, अन्यथा घटादौ अपि तद्योगेन व्यभिचारात्, रूपभेदा(द)न्यथा(त्व)स्य प्रतीतेः उभयत्रापि (वि)शेषात्, विम(तं) (अ)तैजसं गुरुत्वात् सम्मतवत् इति च प्रत्यनुमानात्; अन्यथा स्फटिकादेरपि तैजसत्वप्रसङ्गात्।

तन्मात्रं तद्विशेषो वा न निरू(प)णगोचरौ।
तेन तेजोऽपि पूर्वाभ्यां सहानिर्वाच्यतां गतम्॥

तस्मात्–न तेजो नाम किञ्चित् द्रव्यं–इति॥ १७॥

जातेर्गतेन तुल्यत्वात् क्षितिभागे पुरा गतेः।
अन्यस्य तादृशोऽभावात् न वायुरपि गम्यते॥

वायोः अपि (१) वायुत्वं अलक्षणं, तस्य पृथिवीत्वादिना तुल्यत्वात्। तद्धि रूपवदवृत्तिस्पर्शवद्व्यापकं सामान्यम्। न च तस्य व्यञ्जकं अस्ति। रूपानाधारत्वे सति स्पर्शाधारत्वं–इति चेत्, न; स्पर्शत्वेन वायौ अपि रूपवत्त्वानुमानात्। अचाक्षुषत्वात् तस्य न रूपवत्त्वं–इति चेत्, न; विशिष्टचक्षुर्गम्यताङ्गीकारात्। अस्मदादिचक्षुरगम्यत्वात् न–इति चेत्, न; परमाणुषु तथाविधचक्षुरगोचरेष्वपि रूपवत्त्वस्वीकारात्। कार्येषु रूपवत्त्वं तथाविधचक्षुर्गोचरत्वाव्यभिचारि–इति चेत्, न; द्व्यणुके तदभावात्, तदतिरिक्तेष्वपि केषुचित् तद्गो-

चरत्वानियमात्, वायुपरमाणुषु च रूपवत्त्वस्य एवं अनिराकरणात्। न च अत्र सर्वचक्षुरगोचरत्वं विज्ञातुं शक्यं, सर्वग्रहणासम्भवात्, कतिपयचक्षुरगोचरत्वस्य रूप(व)त्त्वेऽपि सम्भवात्। एतेन–रूपानधिकरणत्वे सति स्थितिस्थापकवत्त्वं तद्व्यञ्जकं—इति व्याख्यातम्। न च (२) अनुष्णाशीतापाकजस्पर्शवत्त्वं तथा—इति युक्तं, पाकात्पूर्वं क्षितिदेशेऽपि तथाविधस्पर्शदर्शना(त्)। सर्वदा तथाविधस्पर्शवत्त्वं विवक्षितं–इति चेत्, न; नित्यत्वविवक्षायां—कार्यभागे तदयोगात्, यावद्द्रव्यभावित्वोक्तौ–पूर्वोक्तातिव्यासितादवस्थ्यात्; पाकात्पूर्वोत्तरकालयोः द्रव्यभेदाभ्युपगमात्–प्राचीने कुम्भादौ उक्तस्पर्शाव्यभिचारात्।

अनादिता च पाकस्य मानाभावादपाकृता।
यत्प्रमाणपथं नैति कथं तदुपगम्यते॥

नापि व्यञ्जकान्तरं उपलभ्यते। न च अत्र प्रत्यक्षं प्रमाणं, अनभ्युपगमात्। द्रव्यत्वं उष्णवायुवृत्त्यपरजातेः भिद्यते, जातित्वात्, गोत्ववत्–इति चेत्, न; द्रव्यत्वं अनङ्गीकुर्वतां आश्रयासिद्धेः, दृष्टान्तस्य च साध्यविकलत्वात्। एतेन लक्षणान्तराण्यपि वायोः अपाकृतानि।

नित्यानित्यविभागस्य प्रागिव स्यात् प्रतिक्रिया।
• कार्ये चतुर्विधो भेदो न त्रैविध्योपपत्तितः॥

न हि 'नित्यश्च' इति प्रभेदः अत्रापि प्रकल्पते, पृथिव्यादौ इव तदनित्यत्वमात्रस्य सुप्रतिपादत्वात्॥ न च–कार्यं शरीरेन्द्रियविषयप्राणभेदात् चतुर्विधं—इति युज्यते; प्राणस्य विषयान्तर्भावात् त्रैविध्यस्यैव सम्भावितत्वात्, अन्तर्बहिर्भावेन भेदे तु आवहनिवहादिना बहुभेदसम्भवात् न चात् र्विध्यनियमसिद्धिः॥

यत्तु उच्यते—विषयः अतीन्द्रियः—इति तत् न।

अनुभूतिविरोधित्वादनुमायाश्च सम्भवात्।
प्रतियोगायोगायोगाच्च कुतोंद्रियता॥ (प्रतियोगिग्योगायोगान् कुत इन्द्रियता त्वचः॥?)

वायुर्वाति इत्यनुभवविरोधात् न अतीन्द्रियत्वं तस्य सेद्धुं अर्हति, विमतं अस्मत्प्रत्यक्षं, अस्मत्प्रत्यक्षस्पर्शाधिष्ठानत्वात्, घटवत्—इति च अनुमानात्। न च तोयस्थे तेजसि व्यभिचारः, तस्य उष्णतोपलब्ध्यैव उपलब्धत्वात् औष्ण्यप्रकाशाभ्यां तेजसोऽनर्थान्तरत्वात्। प्रकाशमात्रं तेजः, धर्मः तु औष्ण्यं–इति चेत्, न; वैपरीत्यस्यापि सम्भवात्, अव्यभिचारस्य उभयत्रापि तुल्य-

त्वात् ॥ विमतं नास्मद्बाह्यप्रत्यक्षं, अरूपिद्रव्यत्वात्, मनोवत्—इति चेत्, न; विशेषणासिद्धेः उक्तत्वात्; आत्मा अस्मत्प्रत्यक्षो न भवति, अरूपिद्रव्यत्वात्, मनोवत्—इति आभाससमानत्वात्; 'नाहं' इति प्रत्यक्षविरोधवत् प्रकृतेऽपि स्पर्शनप्रत्यक्षविरोधाविशेषात् ॥ विमतं न अरूपिद्रव्यग्राहकं, अस्मद्बाह्येन्द्रियत्वात्, अस्मच्चक्षुर्वत्—इति चेत्, न; भागे सिद्धसाध्यत्वात् आत्मादेः तद्ग्राह्यत्वाभ्युपगमात्। कस्यचिदपि तादृशो द्रव्यस्य अग्राहकं विवक्षितं इति चेत्, तथाऽपि विमतं न आत्मग्राहकं अस्मदिन्द्रियत्वात्, अ(स्मच्)चक्षुर्वत्—इत्याभासतुल्यता। प्रत्यक्षविरोधस्तु पूर्ववत् ॥ विमतं अस्मदादिस्पर्शनागम्यं, तादृशस्पर्शनागम्यसङ्ख्यावत्त्वात्, संप्रतिपन्नवत्—इति चेत्, न; प्रत्यक्षविरोधात्, हेतोश्च दुर्वचत्वात्, समस्तास्मदादिस्पर्शनागम्यसङ्ख्यावत्त्वस्य समस्ताज्ञाने दुर्ज्ञानत्वात्, कतिपयतदगम्यतद्वत्त्वस्य व्यभिचारित्वात्, अस्माभिश्च परमतानुपरोधेनाऽनुमानविरचनात् । एतेन अस्मदादिस्पर्शनागम्यपरिमाणवत्त्वात्—इत्यादि हेत्वन्तरं निरसनीयम् ॥ विमतो द्रव्याश्रितः, गुणत्वात्, रूपवत्—इत्यपि न; सिद्धसाध्यत्वात्, तस्य अस्मत्प्रत्यक्षद्रव्यविशेषश्रितत्वाश्रयणात् ॥ एतेन शब्दधृतिकम्पलिङ्गकानुमानानि व्याख्यातानि, तेषु अपि सिद्धसाध्यतासाम्यात्।

तस्मान्नातीन्द्रियो वायुर्न च तत्रेन्द्रियं मतम् ।
यथाप्रतीतिसिद्धोऽसौ साक्षिणेति व्यवस्थितम् ॥ १८ ॥
परस्पराश्रयत्वेन, श्रुतौ हित्वा कुतोऽश्रुतौ ।
सर्गाप्ययौ व्यवस्थाप्यौ, तदनारम्भसम्भवः ॥

कश्च सर्गो नाम ? प्रागसतः सत्तासम्बन्धः—इति चेत्, न; परस्पराश्रयत्वात्, प्रोक्तसत्तासम्बन्धयोः इतरेतरसापेक्षत्वात्। न च असतः सता सम्बन्धः, तस्य द्विष्ठत्वात्, असतो निःस्वभावस्य अनाश्रयत्वात् । तथा च सत्तासम्बन्धे सत्तासम्बन्धः इति आत्माश्रयत्वम्। कार्यानिरुक्तिन्यायाच्च सर्गाद्यसिद्धिः। न हि कार्ये निर्वक्तुमयोग्ये तद्विषयौ सर्गप्रलयौ प्रकल्पेते। कथं च, आकाशादिक्रमं सर्गं पृथिव्यादिक्रमं च प्रलयं तत्त्वज्ञानार्थाम्नायाधिगतं अपोह्य, अश्रुतिसिद्धौ सर्गप्रलयौ (व्य)वस्थाप्येते ॥ यत्तु उच्यते–सिसृक्षोः ईश्वरस्य इच्छादृष्टोपष्टम्भात् आत्माणुसंयोगात् अणुकर्मोत्पत्तौ मिथः संयोगात् द्व्यणुकादिसमस्तकार्यद्रव्योत्पत्तिः, कारणगुणद्वारा च तत्र गुणोत्पत्तिः, "द्रव्याणि द्रव्यान्तरमारभन्ते, गुणाश्च गुणान्तरं" इति—न्यायात् इति—

तत् अयुक्तं; नित्येच्छावतः तस्य सिसृक्षाया अपि तथात्वे सदा सर्ग-प्रसङ्गात्, सहकारिसमवधानाभावात् तस्याः तदहेतुत्वे तस्यापि प्राणिप्रभेदवत् वन्ध्येच्छावत्त्वापातात्; तन्नियमितादृष्टादेः अपि सदा कार्यकरत्वसम्भवात्; अन्यथा तत्संहन्तुः अभावात् कार्योदयायोगात् ॥ न च आत्माणु-संयोगः, निरवयवयोः तयोः संयोगस्य प्रदेशवृत्तेः अनुपपत्तेः। तद्भावे च अणुषु कर्माभावात् न मिथः संयोगः। तथा च द्व्यणुकासम्भवात् न त्र्यणु-कादि उत्पद्येत। परमाणूनां वा अप्रामाणिकत्वस्य पृथिव्यधिकारे साधितत्वात् न समवायिकारणत्वं, निरवयवेषु तेषु प्रदेशवृत्तिसंयोगासम्भवाभिधा(ना)त् न असमवायिकारणसिद्धिः। द्व्यणुकमपि लक्षणप्रमाणयोः असम्भवेन प्रत्युदस्तम् ॥

किञ्च—कार्यं संयुक्तयोर्यद्वत् तद्वत्तेषु बहुष्वपि।
प्रत्यक्षत्वं न तत्कार्ये त्र्यणुकेष्विव दुष्यति ॥

कथं हि—परमाणुभ्यां संयुक्ताभ्यां द्व्यणुकं उत्पद्यते, द्व्यणुकैश्च त्रिभिः त्र्यणुकं—इति (नि)यमः, द्वयोरिव बहुष्वपि परमाणुषु मिथः संयोगेन कार्यारम्भ-सम्भवात्। न च—भूयसां अणूनां आरम्भकत्वे तत्प्रत्यक्षत्वायोगात् तदारब्ध-कुम्भाद्यप्रत्यक्षता—इति सांप्रतं, अप्रत्यक्षवृत्तेरपि त्र्यणुकवत् प्रत्यक्षोपपत्तेः। न च परमाणुवृत्तिकार्ये तन्नियमः, द्व्यणुकवृत्तिकार्येऽपि तुल्यत्वात्, आश्रयासि-द्धेश्च (अ)विशेषात्, परसिद्धेन परस्यैव अनिष्टापादनात्। न च—द्व्यणुकानां द्रव्या-रम्भकत्वं, न द्व्यणुकयोः—इति नियमः, द्वयोरिव परमाण्वोः तयोरपि संयुज्य तदारम्भकत्वाविरोधात्। तदारब्धस्यापि द्व्यणु(क)त्वेन प्रत्यक्षत्वायोगात् तदा-रम्भवैयर्थ्यं इति चेत्, न; द्व्यणुकाभ्यां आरब्धस्यापि द्व्यणुकवत् अणुत्वे तयोरपि परमाणुतुल्यत्वेन आरम्भवैयर्थ्यप्रसङ्गात्। त्र्यणुकानारम्भार्थं तदारम्भोऽर्थवा-न्—इति चेत्, न; परमाणुभिरेव तदारम्भस्य उक्तत्वात्।

किञ्च—गुणो गुणान्न जायेत कार्ये कारणगोचरात्।
कारणेऽपि सतस्तस्य कार्ये कार्याप्रतीतितः ॥

न च कारणगुणानुरोधी कार्यगुणः सम्भवति, परमाणुनिष्ठस्यैव पारिमाण्ड-ल्यस्य तदारब्धे द्व्यणुके तुल्यजातीयगुणारम्भकत्वाभ्युपगमात्, अन्यथा तस्यापि परमाणुत्वापातात्। न च द्व्यणुकवर्तिनोः अणुत्वह्रस्वत्वयोः तदारब्धे त्र्यणुके समानजातीयारम्भकत्वं, तस्यापि द्व्यणुकतुल्यत्वेन तन्मात्रत्वप्रसङ्गात्। द्व्यणुके त्र्यणुके च परिमाणभेदाभ्युपगमात् च—अणुत्वह्रस्वत्वे द्व्यणुकवर्तिनी परि-माणे, महत्त्वदीर्घत्वे च त्र्यणुकवर्तिनी ते स्यातां—इति हि वैशेषिकैः इष्यते।

न च कारणगतविशेषगुणस्यैव कार्ये समानजातीयारम्भकत्वं, कारणाकारणसंयोगात् तद्विभागाच्च कार्याकार्यसंयोगस्य तद्विभागस्य च उत्पत्तेरुपगमात्। न च 'द्विष्ठत्वे सति' इति विशेषणात् अदोषः, कारणबहुत्वात् कारणमहत्त्वात् प्रचयविशेषात् च 'महत्' इत्यभ्युपगमभङ्गात्। न च परमाण्वादिगतरूपादिवत् तद्गतपारिमाण्डल्यादेः न विशेषगुणत्वं, विशेषाभावात् स्वाश्रयव्यवच्छेदोचितावान्तरसामान्यविशेषवत्त्वस्य तत्रापि सत्त्वात्।

परमाणुषु(स्व?)रूपादौ पारिमाण्डल्य(योग?)तः।
विशेषगुणताभाषा मृषा, नैव व्यवस्थिता ॥

यत्तु—संजिहीर्षोः ईश्वरस्य इच्छादृष्टवशात् आत्माणुसंयोगात् अणुषु परम्परया सर्वकार्यारम्भकेषु कर्मोत्पत्तौ मिथो विभागात् असमवायिकारणनाशात् द्व्यणुकनाशद्वारेण समस्तस्य कार्यद्रव्यस्य नाशः—इति तत् असत्।

नित्यत्वात्तद्गतेच्छायास्तत्कार्यस्यातथात्वतः।
नियम्यानां नियम्यत्वान्न शक्ति(शक्तेः?) शक्यतोऽन्यथा ॥

ईश्वरस्य हि संहारेच्छाया नित्यत्वे सर्वदा तत्प्रसङ्गात् न कदाचिदपि सर्गः संसिध्येत्; अदृष्टस्य च ईश्वरेच्छानियमितस्य तन्नियामकत्वायोगात्, एकत्र नियम्यनियामकत्वस्य दुःसाधत्वात्; इच्छाद्यनित्यत्वेऽपि सर्गसंहारादिभिः मुख्यस्य कादाचित्कत्वे निर्विषयेच्छायोगात्, तन्मात्रस्यैव तथात्वापातात्; तच्छक्तेः नित्यत्वेऽपि तस्याः शक्यविषयत्वेन दोषतादवस्थ्यात्। परमाणूनां परम्परया कार्यद्रव्यारम्भकत्वं आत्माणुसंयोगश्च प्रत्युक्तौ। न च तेषु तदभावे कर्म सम्भवति, दृष्टस्य वा कारणान्तरस्य अनिरूपणात् तदभावे विभागाभावात् न संयोगो नश्येत्, तदनाशे कुतो द्व्यणुकादेः नाशः।

प्रत्युक्तत्वादसिद्धत्वात्कारणस्यानिरूपणात्।
अविभागादनाश(च?) द्व्यणुकादि न नश्यति ॥

यदुच्यते-प्रलयावस्थायां परमाणवः चतुर्विधा विभक्ता व्यवतिष्ठन्ते, आत्मानश्च संस्कारादृष्टविशिष्टाः, अन्योऽपि गिरामर्थः, अनित्येष्वपि पाकजाः परमाणुगुणाः—इति तत् न।

आश्रयासिद्धिदुष्टत्वाचातुर्विध्याप्रसिद्धितः।
कार्यत्वस्याविशिष्टत्वात् व्याघातात्प्रक्रिया कुतः ॥

प्रलयस्य प्रत्युक्ततया तदवच्छिन्ने काले यथोक्तविभागासम्भवात्, परमाणूनां च अप्रामाणिकत्वेन तन्निष्ठचातुर्विध्यासिद्धेः, विभक्तस्य विकाराव्य-

भिचारात्, आत्मनि अपि विभागे विकारानिवारणात्, आकाशादेश्च घटादिना कार्यत्वस्य तुल्यत्वात्, प्रलयदशायां अवस्थाने तत्त्वव्याघातात्, प्रक्रियायाश्च अप्रामाणिकत्वात्, न यथोक्ता प्रक्रिया युक्ता । न खलु परमाणुषु चातुर्विध्यं सिध्यति, तमसो मनसश्च आरम्भकपरमाणुसम्भवात् । न हि प्रसिद्धानामेव तेषां तदारम्भकत्वं, तदारब्धे द्रव्ये स्पर्शनियमात् तयोः तदनुपलम्भात्, तमसश्च द्रव्यान्तर(त्व)स्य उक्तत्वात्, मनसोऽपि कार्यताया वक्ष्यमाणत्वात् । न च परमाणुवादे परमाणुभिः विना द्रव्यारम्भोऽभ्युपेयते । न च प्रलये प्राणिभेदाः संस्कारादृष्टोपष्टब्धाः तिष्ठन्तीति युक्तं, "यावद्विकारं तु विभागो लोकवत्"–इति न्यायात्–भेदे कार्यत्वस्य आवश्यकत्वात्, संस्कारादृष्टयोश्च तद्भावस्य इष्टत्वात्, अशेषकार्याभावावस्थायां तदेकदेशावस्थानस्य व्याहतत्वात् । न च अन्यो नित्यसर्गः तत्रास्ति, आकाशादेरशेषस्य कार्यत्वेन नित्यत्वानुपपत्तेः तत्र-तत्र अभिधानात् । न च–अनित्येष्वेपि पाकजाः परमाणुगुणाः सन्ति–इति युज्यते, व्याघाताविशेषात् । न च तदतिरिक्तकार्याभावावच्छिन्नकालस्य प्रलयशब्दवाच्यत्वात् न व्याघातः, नियामकाभावात्; स्वेच्छामात्रेण तथात्वकल्पनायां अतिप्रसङ्गात् । न च तेषां तदनवस्थाने कश्चित् दोषः; स्पर्शरहितानां परमाणूनां कदाचिदवस्थानेऽपि त(था)भा(वा)त्, सत्त्वस्य च सन्दिग्धत्वात्, कार्योत्पत्तेः अन्यथाऽपि सम्भवात्, कारणगुणप्रक्रमप्रक्रियायाः निरस्तत्वात्, पाकादपि कार्ये तदारम्भसम्भवात् ।

न च महासर्गमहाप्रलययोः अस्ति प्रमाणं, श्रुतिस्मृतीतिहासपुराणप्रमाणे परमतप्रवेशात् परमाणुवादपरित्यागप्रसङ्गात् । अनुपभुक्तसमस्तप्राणिकर्माणि युग(प)न्निरुद्धवृत्तीनि, अनुपभुक्तविचित्रकर्मत्वात्, सुषुप्तिकालीनविचित्र(कर्म)-वत्—इति अनुमानात् प्रलयप्रमितिः—इति चेत्, न; सिद्धसाध्यत्वात्, तेषां मोक्षावस्थायां अपर्यायमेव निरुद्धवृत्तित्वस्य सिद्धत्वात्, तन्निवृत्तौ अपि तद्वृत्तिनिरोधात् । तस्मात्—न भवदभिमतौ सर्गप्रलयौ—इति सिद्धम् ॥१९॥

आकाशं अपि किमुच्यते? न हि तस्य एकत्वात् जात्यभावात् (१) तदधिकरणत्वं प्रतिकल्प्यम् । कल्पिताकाशभेदात् आकाशत्वजातिः स्यात्—इति चेत्, नैवं; आकाशस्य एकत्वात् आकाशत्वजात्यभावात्—न तद्वत्त्वं वैधर्म्य–इत्यभ्युपगमविरोधात् । (२) शब्दाधिकरणं—इति चेत्, न;

धर्म्यसिद्धौ कुतो धर्मस्तत्सिद्धेऽसौ (द्धौ स?) वृथा कथम् ।
असिद्धेरन्यतःसिद्धेरुत्पत्त्यादेश्च सम्भवात् ॥

सिद्धे हि धर्मिणि देवदत्तादौ, विद्वत्तादिः तद्धर्मो व्यपदिश्यते। तथा च प्रकृतेऽपि तद्रूपे सिद्धे शब्दः तस्य धर्मो वक्तव्यः, तद्रूपस्य अन्यतः सिद्धौ च व्यर्थो धर्मोपन्यासः। न चान्यत् तस्यास्ति साधकम्। अवकाशदातृत्वं तत्साधकं—इति चेत्, न; अवकाशशब्देन आकाशोक्तौ आत्माश्रयत्वात्, स्थानमात्रोक्तौ च देवदत्तादौ व्यभिचारात् ॥ शब्दः क्वचिदाश्रितः, गुणत्वात्, रूपवत्—इति सामान्यतो धर्मिसिद्धौ, शब्दवत् इतरेभ्यो भिद्यते, शब्दवत्त्वात, घटवत्—इति व्यतिरेकिणा तत्सिद्धिः—इति चेत्, न; तस्य आकाशत्वे नियामकाभावात्; शब्दाधिकरणत्वेन तन्नियमे परस्पराश्रयत्वात्, शब्दस्य स्वातन्त्र्ये—क्वचिदाश्रितत्वव्याघातात् हेत्वसिद्धेश्च, पारतन्त्र्येऽपि—परस्य आकाशात् अर्थान्तरत्वे प्रकृतलक्षणस्य अतिव्यापकत्वात् व्यक्तं इतरेतराश्रयत्वम्। न च गुणत्वं शब्दस्य इति वक्ष्यते। शब्दवतश्च शब्दवत्त्वे स्वाश्रयत्वम्। तद्रहितस्य तद्वत्त्वे विरुद्धता। न च—रूपादौ अपि तुल्यं एतत्—इति वाच्यं, इष्टत्वात्। (३) यस्य शब्दवत्त्वं तत् आकाशं—इति संज्ञायां इदमदूषणं—इति चेत्, न; भेरीशङ्खादौ अतिव्याप्तेः। शब्दवत्त्वं तत्समवायित्वं—इति चेत्, न; 'यस्य' इत्यनाकाशोक्तौ—व्याघातात्, आकाशोक्तौ च—स्वाश्रयत्वात्, सामान्योक्तौ–तस्य.उभया(न)तिरेके भागे व्याघातात् आत्माश्रयत्वात् असम्भवित्वाच्च, तदतिरेके च–उक्तदोषतादवस्थ्यात्। (४) विभुत्वे सति विशेषगुणवत् अचेतनं आकाशं—इति चेत्, न; मीमांसकसमये मनसि व्यभिचारात्। तन्मते तस्य विशेषगुणत्वं असिद्धं–इति चेत् न; तस्य तद्वत्तायाः श्रुत्यवगतत्वात्। न तर्हि मनसो विभुत्वं अन्नमयत्वश्रुत्या कार्यत्वसिद्धेः—इति चेत्, तथाऽपि नभसो न विभुत्वं, कार्यत्वात्। निरवयवद्रव्यत्वात् न–इति चेत्, न; परस्पराश्रयत्वात्। विभुत्वस्य तत्साधकत्वात् न–इति चेत्, न; तस्यैव असंप्रतिपन्नत्वात्। सर्वमूर्तसंयोगित्वात् सिद्धिः–इति चेत्, न; निरवयवत्वे तदसम्भवस्य उक्तत्वात् साध्याविशिष्टत्वाच्च, सावयवत्वे विभुत्वव्याघातात्। न च आकाशस्य विशेषगुणत्वं, शब्दस्य परिमाणवत्त्वेन गुणत्वासम्भवे तद्विशेषगुणत्वस्य दूरनि(र)स्तत्वात्। न शब्दस्य आगमात् आकाशगुणत्वं, शब्दतन्मात्रस्य आकाशस्य पञ्चीकरणात् पूर्वं व्यवहारयोग्यस्य व्यवहारार्थं—सति पञ्चीकरणे स्थौल्यमापन्नस्य स्थूलतां प्रकटयितुं—गुणगुणिभावस्य तत्र अभिधानात्। न तु वस्तुतः तत्र भिन्नत्वं, न वा शब्दाकाशयोः गुणगुणिभावो विवक्ष्यते, तदसम्भवात्।

शब्दो गुणः, सामान्यवत्त्वे सति द्रव्यत्वकर्मत्वयोः अनधिकरणत्वात्, रूपवत्–इति तद्गुणत्वसिद्धिः–इति चेत्, न; शब्दो महानित्यादिप्रती(ति)-विरोधात्, । न च प्रतीतेः औपाधिकत्वं, मुख्यत्वसम्भवे तदयोगात् । गुण-त्वात् अमुख्यत्वे परस्पराश्रयता, शब्दद्रव्यवादिनश्च द्रव्यत्वानधिकरणत्वा-सिद्धिः, हेतुसाध्ययोश्च परसापेक्षसिद्धित्वात् ॥ यत्तु—शब्दो विशेषगुणः, स्पर्शवत्त्वे सति बाह्येन्द्रियग्राह्यसामान्यवत्त्वात्, रूपवत्—इति तदपि निरस्तं; गुणत्वानुपपत्तौ विशेषगुणत्वस्य सुतरां अनुपपत्तेः सामान्यस्य च शब्दत्वे–दृष्टान्तस्य साधनविकलत्वात्, रूपवत्त्वे–धर्मिणि असिद्धत्वात्, सामान्यान्त-रस्य उभयसाधनस्य उक्तविशेषणवतोऽभावात् ।

न च—श्रोत्रं गुणग्राहकं इन्द्रियत्वात्, चक्षुर्वत्—इति वाच्यं, शब्दद्र-व्यत्ववादे तन्निष्ठमहत्त्वादिग्राहित्वेन सिद्धसाध्यत्वात् । एतेन विशेषगुणग्राहकं श्रोत्रं—इत्यपि निरस्तं, इन्द्रियत्वस्य कर्मेन्द्रियेषु व्यभिचारात् ।

न च परममहत्त्वेन विभुत्वं अभिधानीयं, तस्यापि कार्यत्वे दुःसाध-त्वात्; कार्यत्वं (च) उत्पत्तिश्रुतेः अवगतं अनपवदनीयं; तद्गौणत्वं च वियद-धिकरणे निरस्तम् । जडत्वाच्च कुम्भवत् कार्यत्वं अनुमेयम् । न च आत्मनि व्यभिचारः; तस्य चिद्रूपत्वात्, परमाण्वादेश्च पक्षतुल्यत्वात् ।

किञ्च—मूर्ताभावे नभोबुद्धिर्व्यवहारस्य सम्भवे ।
सङ्ग्रहे व्यतिरिक्तस्य गौरवं परमापतेत् ॥

न च तस्य नित्यानुमेयत्वं, चक्षुःसमुन्मीलनसमनन्तरं तदुपलम्भात् । तत अचाक्षुषं, अरूपिद्रव्यत्वात्, आत्मवत्–इति चेत् , न; विशेषणासिद्धेः । आकाशे श्वेतपीति(मा) भ्रान्तिः—इति चेत्, न; बाधाभावात् । न च स्पर्शरहितत्वेन नी-रूपत्वानुमेयं, तमसि व्यभिचारात्; तमश्च तमालमालाश्यामलं महत्त्वोपलभ्य-मानं द्रव्यान्तरं इत्युदीरितम् । नयनव्यापारानन्तरं 'इह पक्षी' इति प्रत्ययात् तद्विषयतया चाक्षुषत्वाच्च कालात्ययापदिष्टत्वम् । 'इह'प्रत्ययस्य चाक्षुषप्र-भामण्डलविषयत्वात् न—इति चेत्, न; 'इह प्रभा' इत्यादिप्रत्ययदर्शनात्, तस्य तदवयवापेक्षत्वे पारम्पर्येण परमाणुविष(य)तया चक्षुरजन्यत्वापत्तौ तद्व्यापारान्वयव्यतिरेकविरोधात् ।

अन्वयव्यतिरेकाभ्यां चाक्षुषविष(चाक्षुषत्वं ?) यदिष्यते ।
नानुमासिद्धितो नान्यद्व्यभिचाराच्च बाधनात् ॥

किञ्च–तदभावेऽपि साक्ष्येव तत्प्रत्यक्षयितुं क्षमः ।
तदभावे सुखादेर्न सिद्धिस्तत्रानुमा कुतः ॥

आकाशस्य चाक्षुषत्वाभावेऽपि साक्षिप्रत्यक्षप्रवेदनीयत्वसम्भवात् म (अ)नुमेयत्वम् । न च साक्षिणि विवदितव्यं, तदभावे—पूर्वस्यां दिशि निर्मलं इदानीं आकाशं—इति प्रतीतिप्रकोपप्रसङ्गात् । न च संभ्रान्तिः, अत्र च तदनुमानलिङ्गपरामर्शाभावात् । न च साक्षिणो भावा(त्) सुखादि प्रत्यक्षतः सिध्यति; मनसा तत्सिद्धौ तु मनोवृत्तेः आत्मनिष्ठायाः—तन्निष्ठसुखादिग्राहकत्वे—तद्ग्राहकत्वेन कर्मकर्तृविरोधात्, केवलस्य आश्रयत्वं विशिष्टस्य ग्राह्यत्वं—इति अविरोधे क्वचिदपि तदभावापातात्; मनोवृत्तेर्मनोनिष्ठत्वेऽपि—न असौ अप्रकाशमाना स्वविषयं गोचरयेत्, प्रदीपवत् प्रकाशात्मत्वात्, जडत्वाच्च । तस्मात् स्वतोऽप्रकाशे वृत्त्यन्तरस्य तु तया साक्षिवेद्यत्वे सुखादेरपि तथात्वम् । तस्मात्—अनुमेयत्वायोगात् 'विभुत्वादेश्च अनुपपत्तेः, नभोऽपि भूतान्तरैः तुल्यं—इति सिद्धम् ॥ २० ॥

कश्च कालोऽभिलभ्य(प्य?)ते ?

परत्वादिधियां भावादन्यत्रापि न तद्गतिः ।
विशेषणस्य चायोगान्न युक्ता कालकल्पना ॥

(१) परत्वादिप्रत्ययनिमित्तः कालः—इति तावत् अयुक्तं; दिशि व्यभिचारात्, तत्प्रत्ययनिमित्तत्वस्य तत्रापि स्वीकारात् । (२) तत्कृतपरत्वादिव्यभिचारोक्त(व्यतिरिक्त ?)परत्वादिप्रत्ययनिमित्तत्वेन विशेषणीयं—इति चेत्, न; धर्मादौ व्यभिचारस्य सत्त्वात्;(३)'द्रव्यं' इति विशेषणे—ईश्वरे व्यभिचारतादवस्थ्यात्;(४)असाधारणत्वे निमित्तस्य विशेषणेऽपि-तस्य तथात्वे सर्वोत्पत्तिमन्निमित्तत्वाभ्युपगमभङ्गात्, तस्यैव अत्र निमित्तत्वे च-अदृष्टादेः तन्निमित्तत्वाङ्गीकारविरोधात् ।

यौगपद्यादिबुद्धीनां न च कालनिमित्तता ।
पर्यायत्वादिदोषाच्च तत्कृष्टि(त्क्लृप्ति)रनिबन्धना ॥

(५) यौगपद्यायौगपद्यचिरक्षि(प्र)प्रत्ययानां अन्यतमं निमित्तं कालः-इत्यपि न, तत्रापि यथोक्तन्यायस्य तुल्यत्वात्, अदृष्टादेरपि यौगपद्यादिप्रत्ययेषु निमित्तत्वाविशेषात्, असाधारणस्य च निरस्तत्वात् । किञ्च तेषां एकार्थत्वं अनेकार्थत्वं वा ? न आद्यः; लक्षणभेदायोगात्, व्यवहारविरोधाच्च । न

द्वितीयः; लक्षणानां प्रत्येकं अव्याप्तेः; एतेषां च कालातिरिक्तार्थत्वे तल्लक्षणत्वायोगात्, कालार्थत्वे च यौगपद्यादिशब्दानां पर्यायत्वापा(तात्); तद्भेदार्थत्वे च तन्मात्रलक्षणस्य वक्तव्यत्वात्।

यत्तु—परत्वापरत्वयौगप(द्यायौगप)द्यचिरक्षि(प्र)प्रत्ययैः अनुमेयत्वं अस्य—इति तत् असत्।

विकल्पानामयुक्तत्वादयुक्तत्वाद्विशेषणं।
यतो न कल्प्यं कल्पेत कथमस्यानुमेयता॥

किमेते समवायित्वेन असमवायित्वेन निमित्तत्वेन वा कालं अनुमापयेयुः। न आद्यः, तस्य अनात्मत्वात्। न द्वितीयः, तस्य द्रव्यत्वात्। तृतीयेऽपि—विपर्यत्वेनापपत्वेन ( विषयत्वेनाविषयत्वेन ? )वा निमित्तत्वं ? न आद्यः, नित्यानुमेयस्य अस्मदैन्द्रियकव्यवसायाविषयत्वात्। न द्वितीयः, अदृष्टादिव्यतिरिक्तकालासिद्धिप्रसङ्गात्, असाधारणत्वविशेषणस्य दूषितत्वात्। घटादयो युगपत् उद्भवन्ति—इत्यादिविशिष्टप्रत्ययाः विशेषणप्रत्ययमन्तरेण अनुपपन्नाः घटाद्युत्पत्तिनिमित्तं कालं उपस्थापयन्ति—इति चेत्, न; युगपदुद्भवन्तीत्यत्र विशेषणस्य यौगपद्यस्य कालविशेषत्वात् तस्य तदुद्भवनिमित्तत्वेऽपि तन्मात्रस्य तन्निमित्तत्वासम्भवात्।

यत्तु—विमतं तपनपरिस्पन्दप्रकर्षादिधीजन्यं, तदनुविधायित्वात्, यथा कुलालानुविधायी घटः तेन जन्यते; स च तपनपरिस्पन्दस्थविरादिदेहप्रत्यासत्तिं अपेक्षते, स्वरूपेण तदप्रत्यासन्नत्वे सति तदवच्छेदकत्वात्, पटावच्छेदकमहारजनरागवत्; सा च द्रव्यकृता, प्रकारान्तरासम्भवे सति प्रत्यासत्तित्वात्, पटादौ महारजनरागप्रत्यासत्तिवत्; तच्च द्रव्यं इतरेभ्यो भिद्यते, विशिष्टपरत्वाद्यनुमेयत्वात्, पृथिवीवत्; न च तत् पृथिव्यादि, तस्य विशिष्टपरत्वाद्यननुमेयत्वात्—इति तत् अयुक्तं; तपनपरिस्पन्दे—प्रसवासाधारणहेतुकृतकार्यत्वात् घटवत्, (प्र)कर्षादिभावस्य परिशिष्टत्वे—क्रियानिर्गुणत्वसिद्धान्तविरोधात्, कालातिरेकादिरूपत्वे—परस्पराश्रयप्रसङ्गात्, कालस्यैव चिन्त्यमानत्वात्। तदनुविधायित्वं च परत्वादेः तपनपरिस्पन्दप्रकर्षादिधिया सह अन्वयव्यतिरेकवत्त्वम्। तत् न; कुलालानुविधायिनि तज्जन्ये घटे अस्तीति दृष्टान्तस्य साधनविकलत्वात्। न च—कुलालान्वयव्यतिरेकानुविधायित्वं—तदनुविधायित्वं, धर्मिण्यभावात्। न च—साधारणं—तदनुविधायित्वं, अप्र-

सिद्धत्वात्। न च तपनपरिस्पन्दस्य स्थविरादिदेहप्रत्यासत्तिः, सवितृसमवेत-क्रियायाः स्थविरादिदेहस्य च स्वरूपेण सन्निकर्षानिरूपणात्। न च तपन(स्प-न्दनस्य) देहभेदप्रत्यासत्त्यभावे तदवस्थे अ(व)च्छेदकत्वं, तपनक्रियायाः देहभेदा-वच्छेदकस्य च तत्सन्निकर्षातिरिक्तस्य अभावात् कुतो न साध्याविशिष्टत्वम्। यथोक्तहेतोश्च दृष्टान्तेऽभावात् कथं न साधनविकलत्वं, उभयानुगतहेत्वर्थस्य दुर्भणत्वात्।

प्रत्यासत्तेरसिद्धौ च कुतः सा द्रव्यकारिता।
आश्रयासिद्धितो हेतोः स्वरूपासिद्धितोऽपि (च ?)॥

तस्य कालत्वे दृष्टान्तस्य साध्यवि(क)लता। ततोऽर्थान्तरत्वे तव अर्था-न्तरत्वम्। न च तस्मिन् पक्षे तस्य इतरेभ्यो भेदोऽनुमातुं शक्यते। विशि-ष्टत्वं च–परत्वा(त्) देहिकृतत्वराहित्यं चेत्, असिद्धं दिक्कालयोः; सर्वोत्प-त्तिमन्निमित्तत्वोपगमात् कालकृतत्वं चेत्; इतरेतराश्रयत्वम्। न च प्रकृत-द्रव्यसाधारणहेतुत्वं साधयितुं शक्यं, असाधारण्यस्य प्रत्युदस्तत्वात्, तर-णिपरिस्पन्दभेदस्य स्थविरादिदेहसम्बद्धोपनायकत्वेन तन्निष्ठपरत्वाजनकत्वे द्वारात्। प्रत्ययादिकार्ये कारणत्वं कालस्य—असाधारणं—इति चेत्, न; व्या-पकात् चेतनात् एव यथोक्तसम्बन्धसिद्धया कार्यपरम्परासिद्धौ कालकल्पना-याः निरवकाशत्वात्, विशेषगुणवत्त्वेऽपि तस्य व्यापित्वात्, चेतनत्वात्, पृथिव्यादेः आकाशात् च वैधर्म्यात्। क्षणादिमहाप्रलयान्ते अस्य आलम्बन-तया कालसिद्धिः—इति चेत्, न; क्षणादिशब्दस्य कालार्थत्वे स्वाश्रयप्रस-ङ्गात्, तदन्यार्थत्वे तद्व्यवहारस्य कालविषयत्वव्याघातात्॥ तस्य च आका-शस्य इव नित्यत्वविभुत्वादि प्रत्याख्येयं, उत्पत्तिश्रुतेः जडत्वस्य च अवि-शिष्टत्वात्॥ न च तस्य लिङ्गविशेषात् एकत्वं, पृथिव्यादेरपि तदविशेषात् तथात्वप्रसङ्गात् भेदप्रतीतेः तुल्यत्वात्।

औपाधिके तु तद्भाने तत्प्रथाऽपि तथा भवेत्।
सङ्गतिश्चेत् कुतो द्रव्यं तदभावे तदभावता॥

यदि तु काले भूतादिभेदप्रतिरूपाः अधिकृताः—इति मन्यते, तर्हि तत्कृ-तैव कालप्रतीतिरपि किं न इष्यते। तथा च उभयाविप्रतिपन्नसवितृगतिविशेष-रूपोपाध्युपरोधात् कालप्रयुक्तव्यवहारसम्भवात् अतिरिक्तकालकल्पनायां गौरवं आपतेत। न च–प्रकृतिपुरुषसङ्गतिः अतिरिक्ताऽस्ति कालपदवेदनीया–इति वाच्यं; तस्याः संयोगत्वे–तदात्मनोऽस्य अद्रव्यत्वापत्तेः, तस्याः तादा-

त्म्यरूपत्वे–तयोः अन्यतरपरिशेषे कुतः सङ्गतिः। तादात्म्यस्य भेदेन सह अभेदत्वात् न–इति चेत्, न; विरोधात्। प्रकृत्यन्तर्भावे च–तस्याः साभासमायात्मत्वात् त्वदभिप्रेतकालासिद्धिः। पुरुषान्तर्भावेऽपि–स एव दोषः। प्रकृत्यन्तराङ्गीकारेऽपि–तुल्यम्। तस्मात्–अभूत् भवति भविष्यति–इत्यादिव्यवहाराङ्गमेव कालः, न वस्तुसन्—इति स्थितम्॥ २१॥

का च दिक् उच्यते?

व्यक्त्यभेदान्न जातिस्ते, लक्षणं नान्यदीक्ष्यते।
प्रमाणाभावतो नैषा वास्तवी भवितुं क्षमा॥

न हि कालाकाशवत् व्यक्त्यभेदा(त्) (१) दिक्त्वं नाम जातिः त्वन्मतेऽस्ति। न च (२) कालकृतपरत्वादिव्यतिरिक्तपरत्वादिप्रत्ययासाधारणकारणं दिक्—इति वक्तुं युक्तं; कालस्य निरस्ततया विशेषणस्य असम्भवित्वात्, असाधारणविशेषणेन च क्षारीकृतत्वात्। एतेन–(३) पूर्वापरादिप्रत्ययासाधारणकारणं दिक्–इति प्रत्युक्तं, पूर्वापरादिशब्दानां च दिगर्थत्वे स्वाश्रयत्वात्, अन्यार्थत्वे च तत्प्रत्यये दिगसाधारणत्वस्य दुर्निरूपत्वात्। न हि घटादिप्रत्यये तदसाधारणत्वं इष्टम्।

धीविरोधान्न चैकत्वं न चाकाशातिरेकिता।
दिशोऽस्ति, तत्प्रथा तस्मादविचारितगोचरा॥

न खलु दिगेकत्वं, प्राचीप्रतीचीत्यादिप्रतीतिविरोधात्। औपचारिकं औपाधिकं वा तद्भेदभानं—इति चेत्, न; तद्भानस्यैव तथात्वप्रसङ्गात्, आकाशे हि सर्वतोऽनवच्छिन्ने सवितृसङ्गतिविशेषयोगात् पूर्वापरादिव्यवहारसम्भवे तदतिरिक्तदिगस्तितायां प्रमाणाभावात्॥ विवादाध्यासितं विशेषगुणविधुरद्रव्याभ्यां जन्यते, कार्यत्वात्, अन्तःकरणद्वयसंयोगवत्–इति चेत्, न; दृष्टान्तस्य साध्यविकलत्वात्। न हि श्रुत्यवष्टम्भेन अन्तःकरणस्य कामादिगुणवैशिष्ट्ये दृष्टे तत्संयोगे यथोक्तं साध्यं सिध्यति।

आद्वसिमानर्य(असिद्धेर्मानयु?)क्तिभ्यां प्रतीतिव्यवहारयोः।
व्यवहारपथं प्राप्ता दिगालम्बनमीक्षताम्॥ २२॥

यत्तु–द्रव्यत्वन्यूनवृत्तिज्ञानवद्वृत्तिजातिः आत्मत्वं, तत् आत्मनो व्यावर्तकं इति–तत् असत्—

द्रव्यत्वस्य निरस्तत्वात्तद्वत्त्वस्यानिरूपणात्।
गुणवत्त्वस्य चासिद्धेस्तद्भेदस्यापबाधनात्॥

न तावत् उक्तलक्षणं आत्मत्वात् आत्मनो व्यवच कं, द्रव्यत्वस्य प्रत्युक्तत्वात् तन्न्यूनवृत्तित्वविशेषणायोगात्। न च तस्य ज्ञानवद्वृत्तित्वम्। ज्ञानवत्त्वं हि चेतनस्य अचेतनस्य वा ? न आद्यः; चेतनशब्दस्य चिदात्मविषयत्वे-तस्य ज्ञानाधारत्ववाचोयुक्तेः रिक्तत्वात्, ज्ञानाधारविषयत्वे-तस्य ज्ञानवत्त्वोक्तौ अंशतः स्वाश्रयत्वापातात्। न द्वितीयः; भूतचैतन्यवादप्रसङ्गात्। ज्ञानवत्त्वं अचेतनस्य-इति वदता हि भूतसङ्घातस्य तद्वत्त्वं इति अर्थात् अभ्युपगतं भवति।

न च आत्मत्वे व्यञ्जकं अस्ति। बुद्धीच्छाप्रयत्नानां प्रत्येकं तद्व्यञ्जकं-इति चेत, न, बुद्धिमत्त्वस्य निराकृतत्वात्; न च अबुद्धिमति प्रयत्नेच्छे सङ्गच्छेते, घटादौ तदभावात्; न च तस्मिन् निर्गुणे ज्ञानादयो युज्यन्ते। न च—आकाशं विशेषगुणाधिकर(ण)विभ्वन्यत्, मेयत्वात् घटवत्-इति वाच्यं; आकाशं श्रोत्रग्राह्यविशेषगुणाधिकर(ण)विभ्वन्यत्, मेयत्वात्—इति आभाससमानत्वात्, अस्थूलादिश्रुतिविरोधाच्च। गुणाश्च अमी गुणवति निर्गुणा वर्तमानाः स्वाश्रयत्वं व्याघातं च आपादयन्तः न आत्मनि वृत्तिं प्रलब्धुं प्रभवन्ति। तर्हि ततोऽन्यत्रापि तेषां उक्तन्यायात् वृत्ति(त्वा)नुपपत्तौ गुणत्वव्याहतिः—इति चेत्, सत्यं; प्रतीतितो गुणवत्त्वं वस्तुतो न क्वचिदपि—इत्यङ्गीकारात् प्रातीतिकं गुणवत्त्वं प्रकृतेऽपि न विरुध्यते, वस्तुतो गुणवत्त्वस्य तस्मिन् अपाकरणात्। एतेन सुखादीनामपि तद्व्यञ्जकत्वं व्याख्यातं,अव्यापकत्वाच्च तेषां तद्व्यञ्जकत्वात् ईश्वरे तदभ्युपगमात्।

न चात्मत्वे प्रमाणं; अनुगतप्रत्ययस्य प्रत्येकं अभावात् मिलितेषु तद्भावे तेष्वेव आत्मत्वप्रमितेः एकैकत्र तदभावः स्यात्। सर्वत्र एवं अनुगतप्रत्ययस्य असाधकत्वं स्यात्—इति चेत्, किं न स्यात्। द्रव्यत्वं सत्तातिरिक्तात्मवृत्ति, जातित्वात्, गोत्ववत्-इति च अनुमानस्य द्रव्यत्वादिनिरासादेव निरस्तत्वात्। न च आत्मनि असति भेदे जातिः युक्ता, व्यक्त्यभेदस्य तद्बाधकत्वात्। न हि तस्य चेतनत्वेन भेदः, प्रतियोगिनोऽचेतनत्वापत्तेः; नापि अचेतनत्वेन भेदः, प्रतियोगिन एव चेतनत्वप्रसङ्गात्।

परापरत्वभेदे(न) यत्तु भेदोपवर्णनम्।
आत्मन्येतेन तन्नीतं न च लक्ष्येऽस्ति भेदधीः॥

न च विजातीयभेदसिद्धिः, तद्भेदस्य भेदापेक्षत्वेन परस्पराश्रयापातात्।

न च तस्य धर्म्यभेदः; अभिन्ने तदवस्थाने तत्त्वव्याघातात्, भिन्ने च तद्भावे स्वाश्रयत्वादिप्रसङ्गात्, साधारणस्य च अभावात् स्वरूपत्वे च अन्यतरपरिशेषे तदभावध्रौव्यात् । न च अभावस्य जडत्वं, घटादेरविशेषात्, ज्ञानवत्त्वस्य निरस्तत्वात् । न च अस्य अपरोक्षत्वमन्तरेण संविदात्मत्वं उपपद्यते; संवित्कर्मत्वस्य घटतुल्यत्वप्रसक्त्या प्रत्युक्तत्वात् तदाश्रयत्वस्य अप्रामाणिकत्वात्, अहमित्यहंकारस्य साक्षिवेद्यत्वप्रथनात्, आत्मनः संविदधीनप्रकाशत्वे च घटसं(वि)दोरिव तत्कर्मत्वात् तद्रूपत्वयोरन्यतरत्वस्य दुर्निवारत्वात्, तत्कर्मत्वाभावे तद्रूपत्वस्य आवश्यकत्वात् संवेदने तद्भावात् ॥ तस्मात्—अद्वितीयो निर्गुणश्चिद्धातुः आत्मा—इति सिद्धम् ॥ २३ ॥

मनश्च किमुच्यते ? विशेषगुणविधुरद्रव्यवृत्त्यात्मावृत्तिजातिः मनस्त्वम् । (१) तदधिकरणं तत्—इति चेत्, न ।

विशेषगुणवत्त्वस्य मनसि प्रमितत्वतः ।
विशेष(ण)स्य चायोगात्कथं तदुपगम्यते ॥

मनसो विशेषगुणवत्त्वस्य श्रुत्यनुभवगम्यत्वात् न तस्य विशेषगुणवैधुर्यम् । न च श्रुत्यादेः युक्तं करणगोचरत्वं आत्मनः; तद्वत्त्वस्य प्रत्युक्तत्वात्, करणगोचरत्वे च श्रुत्यादेः आञ्जस्याभावात्, आत्मनश्च द्रव्यत्वाधिकरणत्वस्य अनिष्टत्वात् आत्मावृत्तित्वविशेषणस्य अकिञ्चित्करत्वात् तत्परित्यागे व्यभिचारस्य दु(रु)त्तरत्वात् । (२) सुखग्राहि इन्द्रियं मन इति–(न ।?)

अ(आत्मा?)नुभवगम्यत्वादिन्द्रियाग्राह्यता यतः ।
सुखस्य, दुःखरागादौ तुल्यमेतदुपेयते ॥

(३) सुखासमवायिकारणाधिकरणं इन्द्रियं मनः—इत्यपि न ।

तदसिद्धेरसंव्याप्तेरयुक्ता परिणामिता ।
विवर्तवादे वादैक्यान्न मनस्ते प्रसिध्यति ।

मनसः सुखाद्याकारेण परिणामपक्षे तदसमवायिकारणस्य असिद्धत्वात् न उक्तं लक्षणं युक्तम् । किञ्च असमवायिकारणं समवायिकारणप्रत्यासन्नं अवधृतसामर्थ्यं—इत्यास्थितम् । तत्प्रत्यासत्तिश्च कारणैकार्थसमवायो वा कार्यैकार्थसमवायो वा ? न आद्यः, पूर्वशब्दादौ अव्याप्तेः । न हि पूर्वशब्दस्य उत्तरशब्दं प्रति असमवायिकारणस्य तत्कारणेन एकार्थसमवायः सम्भवति, नभसः शब्दकारणस्य असमवेतत्वात् । न च आत्ममनःसंयोगस्य सुखाद्यसमवायिकारणस्य तत्कारणेन

आत्मना सह एकार्थसमवायो युज्यते, तस्य निर्द्रव्यत्वेन समवेतत्वानभ्युपगमात्। न द्वितीयः, शौक्ल्यादौ अव्याप्तेः । न हि तन्तुशौक्ल्यं पटशौक्ल्यासमवायिकारणं कार्यैकार्थसमवेतं, शौक्ल्ययोः भिन्नाधिकरणत्वात्–कारणशौक्ल्यस्य कारणाधिकरणत्वात् कार्यशौक्ल्यस्य च कार्यनिष्ठत्वात् । न च कारणैकार्थसमवाये कार्यैकार्थसमवाये वा अनुस्यूता प्रत्यासत्तिः, अप्रसिद्धत्वात् । न च तर्हि (४) सुखपरिणामि इन्द्रियं मनः–इति युक्तं, तथाभूतस्य अन्यथाभूतस्य वा परिणामायोगात्, तद्विवर्ताधिकरणस्य मनस्त्वे पाप(चात्म?)वादप्रवेशात् ।

न च यथोक्ते मनसि मानं अस्ति ।

सिद्धत्वाद्बाधितत्वाच्च परस्यसमवाया(परस्परसमा?)श्रयात् ।
पारिशेष्यस्य चासिद्धेर्नानुमानमिहेष्यते ॥

आत्मेन्द्रियार्थसन्निकर्षः कार्योत्पत्तौ कारणान्तरं अपेक्षते, सत्यपि तद्भावे कार्यानुत्पादकत्वात्, तन्तुवत्–इत्यनुमानम्—इति चेत्, न । कारणान्तरं हि निमित्तं अन्यत् वा ? ( न ) प्रथमे(मः?) सिद्धसाध्यत्वात्, अदृष्टादेः तथात्वात् । न द्वितीयः, आत्मेन्द्रियार्थसन्निकर्षातिरिक्तज्ञानसमवाय्यसमवायिनोः असत्त्वेन बाधात् । न च अतिरिक्तासमवायिसाधने मनःसंयोगसिद्ध्या मनःसिद्धिः, तन्तुरूपादेः सद्भावे पटरूपाद्यनुत्पादकत्वेऽपि तत्र असमवाय्यन्तराभावेन व्यभिचारात् । साध्यमाननिमित्तभूतकारणान्त(र)स्य अदृष्टादेः अन्यत्वे परिशेषात् मनःसिद्धिः–इति चेत्, न; सर्वस्मान्मनोतिरिक्तादन्यत्वे–मनःसिद्धौ तदतिरिक्तसर्वनिमित्त(सिद्धिः तत्सि)द्धौ च अनुमानात् तदन्यमनःसिद्धिरिति परस्पराश्रयात्, यस्माच्चिदन्यत्वे–परिशेषासम्भवात् । तस्मात् न उक्तानुमानात् मनःसिद्धिः ।

स्मृतिः शरीरावच्छिन्नात्मसंयुक्तद्रव्यसाध्या, प्राणिविशेषगुणत्वात्, रूपज्ञानवत्–इति चेत्, मैवम् ।

सिद्धसाध्यत्वतोऽसिद्धेर्विशेषण(?)फलागतेः ।
व्यभिचारादिदुष्टत्वादश्लिष्टं साधनान्तरम् ॥

न हि–शरीरावच्छिन्नात्मसंयुक्तद्रव्यसाध्या स्मृतिः—इति युक्तं, तस्मात् शरीरा(त्) साध्यतायाः सिद्धसाध्यत्वात्।शरीरातिरिक्तविशेषणात् न-इति चेत्, न, तथाविधकालादिसाध्यतया सिद्धसाध्यतायाः तादवस्थ्यात् । न च तस्य उक्तात्मसंयुक्तराहित्यं, सर्वगतत्वाङ्गीकारात् मूर्तसंयोगात् तत्सिद्धावपि शरीरावच्छिन्नस्य आत्मनः तद्भावात् । अवच्छिन्नस्य अन(व)च्छिन्नमात्रत्वात्

न—इति चेत्, तर्हि शरीरावच्छिन्नेतिविशेषणानर्थक्यं; तत्प्रयोगेऽपि तन्मात्रसंयुक्तद्रव्यसाध्यत्वात् फलाभावात्, अजसंयोगाङ्गीकारपक्षे च—सिद्धसाध्यताया दुर्वारत्वात्। ज्ञानस्य आत्मविशेषगुणत्वानभ्युपगमपक्षे च—हेत्वसिद्धिः, दृष्टान्तस्य च साधनविकलता। स्मृतिः द्रव्यकरणिकेति प्रतिज्ञायामपि—तुल्यो दोषः, हेत्वसिद्ध्यादेः उद्धतत्वात् ॥ सुखसंवित् इन्द्रियसाध्या, साक्षात्कारित्वात्, संप्रतिपन्नवत्—इति चेत्, न। किं अस्मदादिसुखसंवित् पक्षीक्रियते किं वा सुखसंविन्मात्रम्? न आद्यः, ईश्वरज्ञानस्य साक्षात्कारित्वेपि नित्यत्वेन इन्द्रियासाध्यतया व्यभिचारात्। न द्वितीयः, तद्भागे बाधा(त्,) विशेषणस्य च अनीश्वरपक्षे—वैयर्थ्यात्, पक्षान्तरे च—आप्तोक्तिसमधिगते मनसि (सि[illegible]ाध-यिषाऽभावात् ॥ विमतं ऐन्द्रियकज्ञानं, विशेषस्य अवस्तुत्वात्, घटवत्—इति चेत्, मैवम्।

आभासेन समानत्वाददृष्टेरविशेषतः।
तन्मानं च न वः सिद्धं मध्यमं भौतिकं मतम् ॥

विमतं चाक्षुषज्ञानविषयः, वस्तुत्वात्—इत्याभास(स)मानत्वात् न प्रागुक्तं अनुमानं युक्तम्। सुखादौ तथाविधज्ञानविषयत्वानुपलब्धिः तुल्या, मनोजनितज्ञानविषयत्वस्यापि तस्मिन् अनुपलम्भात्। न हि मनोजनितं ज्ञानं साक्षिवेद्यतया समीक्ष्य(क्षि?)ते सुखादौ अस्माकं सम्मतं अस्ति। न च ऐन्द्रियकज्ञानमात्रविषयत्वं साध्यं; योगीन्द्रियजन्यज्ञानविषयत्वे सिद्धसाध्यता, त्वदनङ्गीकारे च अस्मदनुव्यवसायविषयत्वेन तथात्वात्, मनोपलापे तदैन्द्रियकत्वध्रौव्यात् तदपलापस्य अनुभवविरोधित्वात्, तदितरत्वविशेषणे च त्वदनुव्यवसायेतरैन्द्रियकज्ञानाविषये परमाण्वादौ व्यभिचारात्।

न च तस्य अणुत्वं, प्रमाणाभावात्। विमतं मूर्तसंयोगसमवायिकारणकजातीयं, अनित्यत्वे सति नित्यविशेषगुणत्वात्, पार्थिवाणुविशेषगुणवत्—इति चेत्, न; असमवायिकारणाप्रसिद्धेः अप्रसिद्धविशेषणत्वात्, ईश्वरविशेषणवत्त्वानङ्गीकरणाच्च विशेषणवैयर्थ्यात्, आत्मनश्च विशेषगुणवत्त्वानभ्युपगमात्, नित्यविशेषगुणत्वस्य सुखादेश्च सिद्धत्वात्, पार्थिवपरमाणूनां तद्विशेषगुणानां च अप्रसिद्धेः दृष्टान्तस्य आश्रयशून्यत्वात्। एतेन—अथ परमाण्वादिगतरूपादिषु व्यभिचारवारणार्थं विशेषणं—इति निरस्तं, तेषां तद्गुणानां च असिद्धत्वात्। तर्हि मनोविभुत्वं युक्तं, ज्ञानासमवाय्याधारत्वात्, आत्मवत्—इति चेत्, न; तस्य विभुत्वे विषयादिसान्निध्ये ज्ञानयौगपद्यात् तदसिद्धेः आश्रया-

सिद्धिः, युगपज्ज्ञा(ना)नुत्पत्तेः तल्लिङ्गत्वाङ्गीकारात्; आत्मनश्च असंयोगित्व-पक्षे दृष्टान्तस्य साधनविकलत्वात्, सर्वकल्पनाधिष्ठानत्वोपाधेश्च सत्त्वात्। न च आकाशादौ साध्याव्याप्तिः, तस्यापि कार्यद्रव्यतया विभुत्वानभ्युपगमात्; मनो विभु न भवति, विभुसंयोगित्वात्, घटवत्–इति च परमतेन प्रयोगयोगात्। विभुसंयोगित्वेऽपि विभुत्वं आत्मादौ इष्टं—इति चेत्, न; विभूनां मिथः-संयोगासम्भवात्, अजसंयोगस्य अग्रे निराकरणात्, आत्मनः तन्निष्ठसंयोगत्वेऽपि स्वव्यतिरिक्तविभुनिष्ठसंयोगवत्त्वाभावात्॥ मध्यमपरिमाणत्वमपि तस्य अनित्यत्वप्रसङ्गात् न–इति चेत्, न; (तत्)प्रसङ्गस्य इष्टत्वात्, मूर्तत्वेन तदनित्य-त्वानुमानात्, परमाणुषु अन्यतरव्यभिचारस्य तव सिद्धा(द्धयां?) सुकरनिरस-नत्वात्। इन्द्रियत्वाच्च तदनित्यत्वं, चक्षुरादौ तथोपलम्भात्, श्रोत्रस्यापि पक्ष-तुल्यत्वात्। तस्मात् मनो भौतिकं मध्यमपरिमाणं च—इत्यास्थेयम्। श्रु-तिश्च "अन्यत्रमना अभूवं नादर्शम्" इत्याद्या मनोऽधिकुर्वन्ती तस्य भौति-कत्वादिकं अनुमोदते, न अन्यथा अन्नमयत्वं तस्य श्रुतं उपपद्येत।

तत् सिद्धमेतत्–पृथिव्यादि मनोन्तं द्रव्यं अविचारितरमणीयं आपातिकं अनिर्वाच्यं—इति॥ २४॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशुद्धानन्दपूज्यपादशिष्य-भगवदानन्दज्ञानविरचिते तर्कसंग्रहे प्रथमः परिच्छेदः।

( द्वितीयः परिच्छेदः । )

सिद्धे द्रव्ये तदाश्रित्य गुणाः सिध्यन्त्ययत्नतः ।
तदभावे निराधारा न ते सन्त्यस्वतन्त्रतः ॥

यद्यपि द्रव्येषु निराकृतेषु तत्पराधीना गुणा निराकृता भवन्तीति न तन्निराकरणं पृथक् अपेक्ष्यते, तथापि पृथगनिराकरणे गुणानां लक्षणिकत्वं प्रामाणिकत्वं च अस्तीति केषाञ्चित् मन्दमनीषाजुषां मनीषा समुन्मिषेत्—इति पृथगेव तन्निराकरणं प्रस्तूयते ।

तथा हि—(१)गुण(:) सामान्यवान् (अ)गुणः संयोगविभागयोरनपेक्षो न कारणं—इति अयुक्तं—

विशेषणस्य वैफल्यादन्योन्याश्रयशक्तितः ।
तदन्तरेण द्रव्यादिव्यावृत्तेरुपपत्तितः ॥

व्यावर्त्यव्यभिचा(रा)भावात् 'अगुण'विशेषणवैयर्थ्यात्, द्रव्यव्यावर्तकत्वेन तदुपादाने च परस्पराश्रयप्रसङ्गात्, 'अनपेक्ष'विशेषणस्यापि तथात्वात्, तद्भावेऽपि संयोगविभागयोः न कारणं इत्यतावतैव द्रव्यकर्मव्यवच्छेदसिद्धेः, न उक्तं गुणलक्षणं युक्तम् । एतेन–(२) सामान्यवान् अचलनात्मकः संयोगविभागयोर्न कारणं गुणः–इति निरस्तं, अच(ल)नात्मकविशेषणस्य अन्यतःसिद्धकर्मव्यावृत्त्यर्थस्य निरर्थकत्वात् । अस्तु तर्हि (३) सामान्यवत्त्वे सति संयोगविभागयोर्न कारणं गुणः–इति लक्षणं–इति चेत्, न; प्रत्युत्पन्नप्रध्वंसिनि द्रव्ये कर्मणि च अतिव्याप्तेः । तज्जातीयेतरत्वं विवक्षितं—इति चेत्, न, तन्निष्ठपरजातीयेतरत्वस्य असम्भवित्वात् । द्रव्यत्वकर्मत्वयोरनधिकरणत्वं अभिमतं—इति चेत्, न, निरस्तत्वात् निरसिष्यमाणत्वाच्च । निरस्तं हि द्रव्याधिकारे द्रव्यत्वम् । कर्मत्वं कर्माधिकारे निराकरिष्यते । संयोगविभागयोरिति व्यर्थं च । एतेन—(४) सामान्यवान् संयोगविभागहेतुजातीयेतरो गुणः—इति निरस्तं, तन्निष्ठपरापरजातीयेतरत्वस्य वक्तुं अशक्यत्वात् । न च (५) गुणत्वमेव तल्लक्षणं, गुणासिद्धौ तदसिद्धेः अन्योन्याश्रयाविशेषात् ।

न च गुणत्वे व्यञ्जकं अस्ति, उक्तलक्षणानां प्रत्याख्यातत्वात् । आकाशवृत्तित्वे सति तद्वृत्ति(तद्)वृत्तिरूपवृत्तिधर्मत्वं तद्व्यञ्जकं–इति चेत्, न; तस्य गुणत्वानतिरेकात् तद्व्यञ्जकत्वायोगात्, विशेषगुणवत्त्वस्य च तथात्वेन तद्व्यञ्जकत्वे सामान्यगुणेषु तदभावप्रसङ्गात् । यत्तु–सामान्यवत्त्वे सति संयोगविभागसमवा-

व्यसमवायिहेतुजातीयान्यत्वं तद्व्यञ्जकं—इति तत् न; तस्य निरस्तत्वात्। तदितरत्वं च गुणानां संग्राहकसापेक्षम्। तत् चेत् गुणत्वं, स्वाश्रयत्वम्। ततो नैव गुणसिद्धौ लक्षणान्तरं अनपेक्षितं आपद्येत। किञ्च, विशेषगुणत्वं स्वाश्रयव्यवच्छेदोचितावान्तरसामान्यविशेषवत्त्वं—इति चेत्, न; स्वशब्देन रूपाद्येकैक(ग्रहे) समस्तग्रहे च तद्विशिष्टस्य अव्यापकत्वात्; आश्रयशब्देन च समवायिनिर्देशे समवायं अनिच्छतां असम्भवित्वात्, आधारमात्राभिधाने तद्व्यवच्छेदोपयुक्तावान्तरसामान्यविशेषवत्त्वस्य संयोगादौ अपि भावात् अतिव्याप्तेः, सामान्यविशेषशब्देनैव अवान्तरोपलभ्यस्य अपि लब्धुं शक्यत्वात् अवान्तरपदवैयर्थ्यात्, अन्यथा विशेषशब्दस्य तथात्वात्। सत्तासाक्षाद्व्याप्यजात्यन्यरूपरसवृत्तिजातिमत्त्वं विवक्षितं—इति चेत्, न; सत्ताया गुणत्वस्य च निराकृतत्वात् यथोक्तजातिव्यञ्जकमालाभावात्॥ गुणत्वापरजातिमत्तया नियतैकद्रव्यव्यवच्छेदकत्वं तद्व्यञ्जकं—इति चेत्, न; निरस्ते गुणत्वादौ तदपरजातिमत्त्वादेः वक्तुं अशक्यत्वात्॥ गुणत्वं विहाय व्यञ्जकं व्याख्येयं—इति चेत्, न, कर्मण्यपि तद्भावात्। गुरुत्ववत् तस्यापि नियतविशेषणेन व्यवस्थितिः—इति चेत्, न, तथापि पृथिव्याद्यनेकद्रव्यव्यवच्छेदकेषु रूपादिषु अव्याप्तेः। तेष्वपि पाकजत्वादिविशेषणं पुरस्कृत्य एकद्रव्यव्यवच्छेदकत्वोपपत्तिः—इति चेत्, तथापि न उक्ता जातिः मानानुपपत्तेः। (सा) सत्तागुणत्वातिरिक्तरूपरसवृत्तिजातेः भिद्यते, जातित्वात्, गोत्ववत्—इति चेत्, न; सत्तागुणत्वयोरभावे हेतोः आश्रयासिद्धेः अप्रसिद्धविशेषणत्वात्। एकेन्द्रियग्राह्यत्वं—इति चेत्, न, प्रभाकुम्भसंयोगादौ तद्भावात्। एतेन—गुणत्वव्याप्यगन्धस्पर्शवृत्तिजातिमान् विशेषगुणः—इति व्याख्यातम्। न च सामान्यगुणत्ववत् विशेषगुणत्वं नाम जातिः अस्ति। तस्यापि जातित्वात् न इति चेत्, न, विशेषगुणातिरिक्तेषु गुणेषु (त)-वृत्तौ—इतरेतराश्रयात्, गुणमात्रवृत्तौ—रूपादिष्वपि तद्भानसंयोगादिसमानत्वप्रसङ्गात्, गुणत्वेन च परस्पराभावासम्भवात्। अतो न विशेषगुणत्वं सामान्यगुणत्वं वा जातिः अस्ति, सविशेषणस्य गुणत्वस्यैव तथा व्यपदिश्यमानत्वात्।

कथं च गुणाश्चतुर्विंशतिरिति नियमः, तेषु निर्गुणेषु सङ्ख्यानुपगमात्। द्रव्यगतायाः तस्याः तत्र एकार्थसमवायात् प्रतीतिः—इति चेत्, न; मुख्यत्वे सम्भवति उपचारकल्पनायोगात् सिद्धान्तविरोधात्; अमुख्यत्वे परस्पराश्रयत्वस्य उक्तत्वात्; सति च सौन्दर्यादौ न नियमः, रूपान्तर्भावे वैपरीत्यस्यापि सुवचत्वात्।

गुणानामगुणत्वेन तेषु सङ्ख्या कुतो मता ।
मुख्यत्वे सम्भवत्येव नोपचारोऽपि युज्यते ॥
परस्पराश्रयत्वेन सिद्धान्तोऽपि न सिध्यति ।
सौन्दर्यादेरतिव्यक्तेर्नियमोऽपि कुतो भवेत् ॥
वैपरीत्योपपत्तेश्च व्यर्थोऽन्तर्भावसंकथा ।
तस्माद्गुणा न सङ्ख्याता नियतासिद्धिभागिनः ॥ २९ ॥

रूपमपि किमुच्यते ? (१) रूपत्वजात्यधिकरणं—इति चेत्,

जातेरुपाधितो भङ्गादन्योन्याश्रयताहतेः ।
परस्परानपेक्षत्वाद्विमानत्वात्कथं हि तत् ॥

विशेषगुणत्वे सति चक्षुर्मात्रग्राह्यत्वोपाधिना रूपसंज्ञाप्रवृत्तौ तज्जातिकल्पनानवकाशात् न तदधिकरणं रूपलक्षणं उपपद्यते । परमतेन च उपाधिरुच्यते । औपाधिकस्य उपाध्यधिगतिपूर्वकाधिगतत्वेऽपि प्रकृते श्वेतपीतादौ प्रतिपन्ने कथमिह रूपसंज्ञा इति जिज्ञासायां, एतन्निपत्तिद्वारा अवधारितकरणविशिष्टोपदिष्टोपाधिना तत् निर्वहेत् । न (च) इतरेतराश्रयता; वास्तवस्य विषयगतरूपत्वस्य, करणनिविष्टचक्षुष्ट्वस्य च, परम्परपुरस्काराभावात् । न च अत्र मानं, अनुगतावगतेः औपाधिकधिप(ग)त्वेनापि चरितार्थत्वात् ; गुणत्वं विशेषगुणत्वान्यधर्मरूपगतावान्तरजातेः अन्यत्, जातित्वात्—इत्यस्य च आश्रयासिद्ध्यादिदुष्टत्वात् । न च—तर्हि (२) रूपत्वाधिकरणं तत्—इति युक्तं; तद्धि रूपमात्रवृत्तीति तद्गुणाधीनग्रहणत्वात् इतरेतराश्रयत्वादि आवहेत्, उक्तन्यायाच्च तन्निर्वचनायोगात् । (३) विशेषगुणत्वे सति चक्षुषैव ग्राह्यं रूपं—इति चेत्, न; 'विशेषगुणत्व'विशेषणेन क्षारीकृतत्वात्, द्व्यणुकादिरूपे च तव अव्याप्तेः । तत्रापि योगिचक्षुर्गम्यत्वं अस्ति—इति चेत्, न; तदनङ्गीकारवादे तदयोगात्, मनोग्राह्यतया च अवधारणात् । (४) बाह्येन्द्रियेषु चक्षुषैव इति विवक्षितं—इति चेत्, न; रूपसिद्ध्यतिरेकेण चक्षुषोऽसिद्धेः, इतरेतराश्रयत्वात् । यद्यपि चाक्षुषे द्रव्ये चक्षुषा रूपं निरूप्यते, तथाऽपि तदगोचरे कुतः तद्धीः सिध्येत् । पृथिवीत्वादिना—इति चेत्, न, द्व्यणुकाद्यनङ्गीकर्तुः आश्रयासिद्धेः । न च तस्य चक्षुःसहकारित्वनियमः, क्वचित्तदभावाभ्युपगमात्, क्वचित्तद्भावेन चेतनशेषत्वेऽपि । न च भूतत्रयनिष्ठत्वं नियन्तुं शक्यं; नभोन(भ)स्वतोरपि, तद्भावस्य उक्तत्वात् ।

विमतं नित्यं, असमवायिहीनभावत्वात्, सम्मतवत्–इत्यपि न; असमवायिनोऽप्रसिद्धौ घटादौ अपि तद्धीनभावत्वस्य अभावेन व्यभिचारात्, भावत्वस्य च प्रागेव प्रत्युक्तत्वात्, आत्मनि च नित्यत्वधर्मवत्त्वानभ्युपगमात्। न च–विमतं कार्यं, पृथिवीविशेषगुणत्वात्, घटरूपवत्—इति युक्तं; विमतं कार्यं, जलादिविशेषगुणत्वात्, कूपादिरूपवत्,—इत्यपि सम्भवात्। न च—विमतं अग्निसङ्गासमवायिकारणविशेषगुणवत्, पार्थिवाणुत्वात्, जलाणुवत्—इति व्यतिरेकी; तदसंप्रतिपत्तौ आश्रयासिद्धेः, स्वरूपासिद्धेश्च, व्यतिरेकभूमेश्च अप्रसिद्धतया दृष्टान्तस्य आश्रयहीनत्वात्॥ विमतं घटोत्पत्तेरनन्तरं जायते, घटगुणत्वात्, घटया(जा?ग?)तसंयोगवत्—इत्यपि न; घटाकाशसंयोगादौ व्यभिचारात्, तस्यापि कार्यत्वात्, तदनन्तरभावित्वे घटोत्पत्तिक्षणे तदसंयोगिनो नभसो विभुत्वासम्भवात्॥ विमतं समानजातीयासमवायिकारणकं, कार्यगतविशेषगुणत्वात्, पटगतशौक्ल्यवत्—इत्यपि न; द्व्यणुकगतरूपपक्षीकारे–हेतोः आश्रयासिद्धत्वात्, त्र्यणुकचतुरणुकादिगतरूपपक्षीकारे च—असमवायिकारणाप्रसिद्धेः अप्रसिद्धविशेषणत्वात्, दृष्टान्तेऽपि तत्संप्रतिपत्त्यभावात्॥ न च आश्रयनाशात् तन्नाशः, तयोः तादात्म्यात् द्रव्यनाशकादेव तत्सम्भवात्। न च–स्वतन्त्रपरतन्त्रयोः न तादात्म्यं, भेदानुपलब्धिस्तु नित्यपारतन्त्र्यात्–इति युक्तं, गुणगुणिनोस्तदभावे द्वावस्यैवा(भावाभावव?)दत्यन्तभिन्नयोः तदनुपलम्भात्। अभेदेऽपि तुल्या अनुपलब्धिः—इति चेत्, तथाऽपि भेदाभेदाभ्यां दुर्भणस्य प्रतीतिमात्रशरीरस्य तद्भावो न विरुध्यते। तत् एवं—

> प्रतीतिमात्रसंसिद्धं व्यावहारिकमिष्यते।
> रूपं न वास्तवं (युक्त)मुक्तयुक्तिसमन्वयात्॥
> शौक्ल्यकार्ष्ण्यविभागे न विभागस्तत्र गम्यते।
> आधारस्यातथाभावादनेकत्वं कुतो मतम्॥ २६॥

कश्च रसो नाम?(१)रसत्वाधिकरणं—इति चेत्, तर्हि तदेव उच्यताम्। गुणत्वन्यूनवृत्तिमधुरवृत्तिविशेषगुणत्वान्यजातिः—इति चेत्, न;—

> गुणत्वादिनिरासेन तन्निरासप्रसिद्धितः।
> रसत्वानतिरेकाच्च स्वाश्रयत्वप्रसङ्गतः॥

न हि गुणत्वादौ प्रागुक्तन्यायेन प्रत्युक्ते यथोक्ता जातिः सेद्धुं अर्हति, विशेषणासिद्धौ विशिष्टासिद्धेरि(र?)ति स्पष्टत्वात्। न च एवंविधा जातिः रसत्वातिरिक्ताऽस्ति। तदनतिरेके च तत्प्रश्ने तेनैव प्रतिवचने कथं न आत्माश्रयत्वम्।

आश्रयासिद्धिदुष्टत्वाद्विशेषणनिराकृतेः ।
परस्पराश्रयादेश्च प्रमाणं नेह किञ्चन ॥

गुणत्वं गुणेतरावृत्तिमधुरामधुरवृत्तिविशेषणत्वान्यजातेः भिद्यते, जातित्वात्—इति चेत्, तत् न, गुणत्वस्य निरस्तत्वात् आश्रयासिद्धिप्रसङ्गात्। एतेन—(२) गुणत्वे सति रसनाग्राह्यो रसः–इति निरस्तं, विशेषणस्य निराकृतत्वादेव विशिष्टलक्षणप्रवृत्तेः अनुपपत्तेः ।

किञ्च, सिद्धे रसे तद्ग्राहकं बहिरिन्द्रियं रसनं नाम सिध्यति, सिद्धे च तस्मिन्विशिष्टलक्षणावष्टम्भात् तत्सिद्धेः कथं न इतरेतराश्रयत्वम् । न च रसनजनितज्ञानं रसे प्रमाणम् । रसनं हि रसोपलब्धिकरणं बाह्यं गृह्यते । तच्च प्राचीनदोषानु(ष)क्तं न च ज्ञातमात्ररसे मानं, रूपज्ञानस्यापि तन्मानत्वप्रसङ्गात् । रसविशेषितं ज्ञानं तथा—इति चेत्, न, स्वाश्रयापातात् । अप्रत्यक्षगते तस्मिन् पृथिवीत्वादि प्रमाणं–इत्यपि न, तदसंप्रतिपत्तेः आश्रयासिद्धेः उक्तत्वात् ।

नित्यत्वादिनिरासोऽपि रूपस्येवास्य सिध्यति ।
व्यावहारिकमस्यापि ततो रूपं निरूप्यताम् ॥ २७ ॥
प्रागुक्तनीत्या गन्धोऽपि निराकरणमर्हति ।
न पृथिवीमात्रवृत्तित्वमन्यत्रापि गतत्वतः ॥
द्रव्यान्तरेऽपि तद्बुद्धेर्न बाधोऽध्यवसी(य)ते ।
नित्यानित्यविभागोऽपि पूर्ववत्किं न गृह्यते ॥

गन्धो (१) गन्धत्वाधिकरणं—इत्यपि अयुक्तम् । तद्धि गुणत्वन्यूनवृत्तिसौरभ्यवृत्तिविशेषगुणत्वान्यसामान्यं इष्टं, तच्च प्रागुक्तन्यायप्रत्युक्तं न गन्धव्यवस्थित्यै पर्याप्तम् । नापि–(२) गुणत्वे सति घ्राणग्राह्यत्वं—तल्लक्षणं, तत्रापि विशेषणनिराकरणात् इतरेतराश्रयाच्च ॥ न च अयं पृथिवीमात्रवृत्तिरिति युक्तं, द्रव्यान्तरेऽपि तत्सम्भवाभिधानात्, प्रतीतेश्च अबाधितत्वात् ॥ न च तस्य सर्वत्र अनित्यत्वं, पार्थिवपरमाणुषु गुरुत्वादिवत् तन्नित्यत्वे बाधकानधिगमात् । पाकजत्वात् न—इति चेत्, न, अवयविष्वेव तत्सम्भवात्, कथं अन्यथा गुरुत्वादेरपि तथाभावसम्भवे नित्यत्वम् । अतिशयादर्शनं तु सन्दिग्धत्वात् न पाकनिवर्तकम् ॥ तस्मात्—गन्धोऽपि व्यावहारिको न पारमार्थिकोऽस्ति—इति स्थितम् ॥ २८ ॥

स्पर्शोऽपि दर्शनादुक्तयुक्तेर्नासौ प्रसिध्यति ।
विशेषगुणतस्तस्य त्रैविध्यं च न युज्यते ॥

न हि—स्पर्शस्य (१) स्पर्शत्व(वत्त्वं)—लक्षणम्। तद्धि रूपव्यापकविशेष-गुणमात्रवृत्ति सामान्यम्। न च तत् निरस्ते रूपे विशेषगुणवत्त्वं सुनिरूपम्। एतेन—(२) विशेषगुणः उष्णानुष्णवृत्ति(स)द्व्यावृत्तिजात्यन्यः, जातित्वात्—इति निरस्तम्। न च—(३) गुणत्वे सति त्वगिन्द्रियमात्रग्राह्यत्वं—तल्लक्षणं, पूर्ववदस्यापि प्रतिवचनसम्भवात्। न च—(४) विशेषगुणत्वे सति क्षित्यादिचतुष्टयनिविष्टत्वं—तल्लक्षणं, स्थितिस्थापकस्यापि स्पर्शवद्विशेषगुणत्वसम्भवे विशेषणवैयर्थ्यात्। तस्य द्रव्यचतुष्टयसाधार(ण)त्वात् न—इति चेत्, न, तुल्यत्वात्। अवान्तरविशेषात् असाधारण्यं—इति चेत्, न; स्थितिस्थापकस्यापि गन्धसाहचर्यादिना तदविरोधात्। नापि—(५) विशेषगुणत्वे सति रूपव्यापकत्वं—तल्लक्षणं, स्थितिस्थापके दर्शितातिव्याप्तेः अविशेषात्। न च अस्य नियोगतः त्रैविध्यं, अनुष्णाशीतापाकजत्वस्यापि जात्यन्तरस्य सम्भवात्। अनुष्णाशीतत्वस्यैव विशेषणं—अपाकजत्वं—इति चेत्, तर्हि स्पर्शत्वस्यैव विशेषणं उष्णत्वादिः इति न त्रैविध्यसिद्धिः। तर्हि, पाकजत्वे सति अनुष्णाशीतत्वं अपि जात्यन्तरं स्यात्—इति चेत्, किं न स्यात्। व्यञ्जकभावात् न—इति चेत्, न, शीतत्वादौ अपि तुल्यत्वात्। 'इदं शीतं'इत्यादिविशिष्टप्रत्यये विशेषणत्वस्य तद्व्यञ्जकत्वे 'पाकजत्वे स(ति अ)नुष्णाशीतमिदं' इति—विशिष्टप्रत्यये विशेषणत्वस्य तद्व्यञ्जकं अपि स्यात्। एतेन अपाकजत्वविशेषितानुष्णाशीतत्वेऽपि व्यञ्जकं उन्नेयम्।

स्पर्शशब्दधियौ तस्मादविचारितनिष्ठिते।
मायामतं प्रविश्यैते नि(वि?)वृण्वाते यथोदिते ॥ २९ ॥

यत्तु उच्यते—पाकजप्रक्रिया मुक्तावुपयुक्ता यतो मता।
अतो रूपादिनिष्ठा सा प्रतिष्ठितपथं गता ॥

पाकजेषु पार्थिवपरमाणुरूपादिषु जन्मादिनिरूपणं विवेकद्वारा मुक्तौ उपयुक्तं, तस्मात् एषा प्रक्रिया प्रमाणप्रयोजनवती (इति)—तत् अयुक्तम्।

अतिप्रसङ्ग(तः पाक)प्रक्रिया न प्रकल्पते।
प्रमाणादिप्रहीणा च न प्रामाणिकसम्मता ॥

तथाहि तण्डुलादिष्वपि पाकवशात् ओदनादिभावनिरूपणस्य मुक्तिहेतुत्वप्रसक्तौ सकलमपि कयाचन विधया मुक्तिसाधनमिति वृथा तद्विशेषेण गतिशास्त्रारम्भप्रसङ्गः। तत्प्रतिपत्त्यर्थं तदारम्भः स्यात्—इति चेत्, न; न हि घटादि निरूपयतो बहिर्मुखस्य मुक्तिर्युक्ता। तत्तद्विवेके विविक्तात्मधियो मुक्तिः

स्यात्—इति चेत्, न; भेदधियः तद्धेतुत्वे प्रमाणाभावात्, तस्याश्च अनर्थहेतुभावस्य "द्वितीयाद्वै भयं भवति"—इत्यादिश्रुतिसिद्धत्वात्।

न च पैलुकानां प्रक्रिया प्रकल्पते। ते खलु—आपाकनिक्षिप्तस्य कुम्भादेः अग्निसंयुक्तस्य परम्परया कारणभूतेषु परमाणुषु अग्निसंयोगात् कर्मोत्पत्तौ मिथोविभागात् द्रव्यारम्भकसंयोगनाशाद्व्यणु(°शात् द्व्यणुकनाशे अणुषु औ ?)-ष्ण्यापेक्षात् अग्निसंयोगात् रूपादिनाशे सति, अग्निसंयोगान्तरात् तथाविधात् अपूर्वरूपाद्युत्पत्तौ अदृष्टोपष्टब्धात्माणुसंयोगात् अणुषु कर्मोत्पत्तौ, तेषां परस्परसंयोगात् द्व्यणुकाद्युत्पत्तिद्वारा तेषु कारणगुणपूर्वकतया रूपादि उत्पद्यते—इति कल्पयन्ति। सा च कल्पना न अवकल्पते, परिणामवादे विवर्तवादे च परमाणूनां परम्परया कुम्भाद्यारम्भकत्वे प्रमाणाभावात्॥ न च तेषु प्राचीनरूपादिनाशे मानं अस्ति। पार्थिवपरमाणुरूपादयो विनाशिनः, पृथिवीविशेषगुणत्वात्, घटरूपवत्–इति चेत्, न; सलिलपरमाणुरूपादयो विनाशिनः, सलिलविशेषगुणत्वात्, कूपादिरूपवत्—इत्यपि सम्भवात्। न च–पार्थिवाणुषु रूपाद्युत्पादनाशौ नैकपावकसंपर्ककारणकौ, रूपाद्युत्पादनाशत्वात्, श्यामाद्युत्पादनाशवत्–इति वाच्यं; अनेकपाव(क)संयोगजन्यत्वे साध्ये–दृष्टान्तस्य साध्यविकलत्वात्, पृथिवीगतश्यामत्वादेः अनादित्वपक्षे—तदुत्पादस्यैव अभावात्, पक्षान्तरेऽपि—तदुत्पादस्य अग्निसंयोगकृतत्वानभ्युपगमात्, आमे रूपादौ तदनुपयोगात्, तन्नाशस्य तज्जन्यत्वेऽपि द्वयोः अनेकपावकयोगजन्यत्वराहित्यात्; एकपावकसंयोगजन्यत्वाभावे च साध्ये–कल्पनालाघवप्रतिघातात् एककारणात् कार्यद्वयोपपत्तौ कारणभेदकल्पनायाः विफलत्वात्। न च पार्थिवपरमाणुः अग्निसंयोगजविशेषगुणवान्, नित्यत्वे सति अनित्यविशेषणवत्त्वात्, आत्मवत्—इति युक्तं, आश्रयस्य हेतुविशेषणस्य च असिद्धत्वात्, दृष्टान्तस्य च साधनविकलत्वात्। परमाणुपर्यन्ते च कार्यनाशे स्वतन्त्रपरमाणुपाकेन घटादीनां पुनरावृत्तौ कुलालादिव्यापारवैयर्थ्यात् लोकव्यवहारोच्छेदौ प्रसज्येयाताम्। तयोः आमघटादिविषयता—इति चेत्, न, पक्कघटादिवत् तस्यापि तदनपेक्षत्वसम्भवात्, प्रतीतिविरोधस्य तुल्यत्वात्। आपाकनिक्षिप्तकुम्भादेश्च परमाणुपर्यन्तनाशेन पुनरुद्भवाभ्युपगमे तदुदयात् अग्रे छिद्रविनिहितविलोचनस्य तदभावोपलम्भसम्भवे तदुपरिवर्तिनां च मूर्तानां आधाराभावेन यत् मा (पातः आ ?)पतेत्। जन्मनाशयोः नैरन्तर्यात् न—इति चेत्, तर्हि तथैव तयोः सर्वत्र नैरन्तर्यप्रसक्तौ तथागतमति(त्वं) स्यात्।

एतेन पिठरपाकपक्षोऽपि प्रतिक्षिप्तो वेदितव्यः; सति द्रव्ये पूर्वरूपादि-परावृत्त्या पराचीनरूपाद्युत्पत्तेः अप्रामाणिकत्वात्, अम्भोलौहित्यादिवत् अन्य-संबन्धात् तत्र अन्यरूपादिप्रतिभाससम्भवात्।

पाक(ज)प्रक्रिया तस्मान्न मानफलभागिनी।
बालधीबन्धनायैषा भीषिका मूढभाषिता॥ ३०॥
सङ्ख्या सङ्ख्येयदोषत्वान्न पृथग्भावभागिनी।
एकत्वे भवति द्वित्वं भवतीति (च?) दुर्वचम्॥

का च इयं सङ्ख्या नाम? (१) एकं द्वे त्रीणीत्यादिव्यवहारविषयः—इति चेत्, न। एकादिशब्दैः सङ्ख्योक्तौ—आत्माश्रयत्वात्, द्रव्यस्वरूपोक्तौ—अतिरिक्तसङ्ख्यापलापप्रसङ्गात्॥ ननु—एकत्वं घटाभेदः चेत्, तदभेदो—घटो वा तदतिरिक्तो वा? प्रथमे पर्यायत्वात्, अभिन्नो घट इति सहप्रयोगो न स्यात्, अभेदव्यवहाराननुवृत्तिश्च, स्वरूपस्य अननुवृत्तत्वात्। द्वितीये स भावोऽभावो वा? न आद्यः, संज्ञान्तरेण एकत्वसङ्ख्याभ्युपगमप्रसङ्गात्। न द्वितीयः, एकत्वव्यवहारस्य सप्रतियोगिकत्वप्रसक्तेरिति—तत् असत्; एकत्व-स्यापि गुणत्वेनाभिमतस्य घटादिभेदे सति एको घट इति पर्यायतया सहप्रयोगा-योगस्य व्यवहाराननुवृत्तेश्च तुल्यत्वात्, तस्य च घटात् भेदे पटवत् गुणत्वानु-पपत्तेः। (त)त्संबन्धात् उत्पत्तिः—इति चेत्, न; पटस्य तत्संबन्धेऽपि तद्गुण-त्वानभ्युपगमात्, समवायस्य अन्यत्रापि सत्त्वेन तद्गुणत्वनियामकत्वायोगात्; संबन्धेऽपि भेदाभेदविकल्पसम्भवात्, भेदयोरनिष्टत्वाच्च॥ यत्तु–भेदसमुच्चयो ऽनेकत्वं—इति (तत्) अयुक्तं; भेदस्याभावत्वे—द्वित्वादेरनेकत्वस्य तुच्छत्वाप-त्तेः, भावत्वेन–अधर्मयोगश्चेत्—एकस्मिन्नपि घटे तद्भावात् द्वित्वादिप्रसङ्गात्, विरुद्धधर्मयोगश्चेत्—अविरुद्धयोर्घटयोः अद्वित्वापातात्, नानालक्षणयोग-श्चेत्—स न, क्षणयोः अद्वित्वप्रसङ्गात्; स्वरूपत्वे च–द्वित्वस्य स्वरूपाति-(रि)क्तस्य अभावात् तदपेक्षत्रित्वाद्यनुत्पत्तेः—इति, तदपि न; तस्य गुणत्वेऽपि यथोक्तदोषपरम्पराया दुर्वारत्वात्, तस्य धर्मत्वेन स्वरूपपक्षोक्तदोषाभावेऽपि धर्मधर्मिभावस्य निर्वक्तुं अशक्यत्वात्। न हि निर्धर्मके सधर्मधर्मित्वं, विरो-धात् आत्माश्रयाच्च। त(द्)योग्ये तद्भावेऽपि तद्योग्यतारहिते तद्भावे व्याघातात्, तद्वति तद्भावे च आत्माश्रयादेः आवश्यकत्वात्। धर्मनिषेधेऽपि तुल्यं—इति चेत्, न, तस्य समारोपितविषयत्वात्। धर्मविधिरपि समारोपितधर्माभावे (व)स्तुनि स्यात्—इति चेत्, न, वस्तुतो धर्मवति तद्विधौ उक्तदोषानुषङ्गात्।

समारोपनिवृत्त्यर्थत्वात् न—इति चेत्, न; तस्यैव मायाविलासातिरिक्तस्य असम्भवाभिधानात्; अस्मन्मते च तथाविधारोपाङ्गीकारात्। न तर्हि वास्तवस्य अनिषेधो धर्मस्य—इति चेत्, न; धर्माभावस्यापि तथाविधस्य अनिषेधसाम्यात्, नथावि(ध)धर्मस्य च अप्रामाणिकत्वात्, त्वन्मते च आरोपानुपपत्तेः उक्तत्वात्। नापि द्व्यणुकपरिमाणासमवायिवृत्ति; गुणत्वस्य साक्षाद्व्याप्यजातेश्च अत्र सङ्ख्यात्वानतिरेकात् वक्रोक्तेः अकिञ्चित्करत्वात्, तन्मात्रोक्तौ च–परस्पराश्रयताया दुष्परिहरत्वात्।

(२)गणनाऽसाधारणकारणं सङ्ख्या–इत्यपि न, गणनस्यैव तदसिद्धाः(द्धेः?) तदसाधार(ण)कारणत्वस्य च असाधारण्यनिराकरणादेव निराकृतत्वात्। (३) उक्तजातीयत्वं तत्—इति चेत्, न, तस्य समनन्तरमेव निराकरणात्। द्व्यणुकपरिमाणासमवायिकारणं गुणत्वसाक्षाद्व्याप्यसाधारणगुणत्वेतरजातिमत्, गुणत्वात्, रूपवत्—इति चेत्, न,आश्रयासिद्ध्यादिदुष्टत्वात्॥ यत्तु—एकत्वव्यवहारो गुणानुबन्धी, गणनाव्यवहारत्वात्, द्वित्वादिव्यवहारवत्—इति, तत् न, दृष्टान्तस्य साध्यविकलत्वात्। साधितं हि द्वित्वादिव्यवहारस्य अगुणनिबन्धनत्वम्। गणनाव्यवहारश्च एकत्वव्यवहारश्चेत्-द्वित्वादिव्यवहारे तदभावात् दृष्टान्तस्य साधनविकलता, द्वित्वादिव्यवहारश्चेत्–धर्मिणि तदभावात् असिद्धिः। साधारणस्यापि धर्मिणि दृष्टान्ते च अभावात् स एव दोषः।

न च एकत्वं जातिः, अनुगतव्यवहारस्य भेदाभावोपाधिकृतत्वात्। नापि द्रव्यत्वेन परापरत्वं; द्रव्यातिरिक्तैकत्वाभावात्, तद्वृत्तेः तस्य द्रव्यमात्रवृत्तित्वात्, गुणादिवृत्तित्वस्य निराकृतत्वात्। न च द्वित्वादिजातिः अस्ति, द्वित्वैकत्वादिना समानत्वात्। उक्तं चैतत् द्वित्वखण्डनप्रस्तावे। न च धर्मिणि एकत्वे सत्येव द्वित्वादि भवितुं अलं, तद्विरोधात्; असति च करणाभावात्। न च सत्ये(त्तया ए?)व, अपेक्षाबुद्धेः तज्जन्यानेकैकत्वविषयायाः तस्या दुर्वचत्वात्, एकत्वेऽनेकत्वायोगात्, तस्य स्वरूपमात्रत्वे सर्वत्रापि तथात्वसम्भवात्॥ न च–नित्यगतं एकत्वं नित्यं, कार्यगतं कारणपूर्वकं आश्रयनाशाच्च नश्यति—इति वाच्यं; आत्ममात्रस्य नित्यत्वात्, तत्र च एकत्वसङ्ख्याऽभावात् तादात्म्ये च–कारणगुणप्रक्रमादेः अयोगात् सहैव उत्पत्तिविनाशयोः अनुभवानुसारित्वात्॥ यत्तु–द्वित्वादि निमित्तनाशात् नश्यति–इति, तत् न; तन्नाशेऽपि कुम्भादिवत् तदवस्थानाविरोधात्, तदभावे प्रतीत्यभावेऽपि सत्त्वस्य दुरपह्नवत्वात्, तत्कालमात्रभाविनि च सत्त्वे क्षणभङ्गप्रसङ्गात्॥

यत् पुनरुच्यते—द्वितन्तुकारम्भकसंयोगविरोधिविभागजनकतन्तुकर्म एकत्वसामान्यज्ञाने युगपत् जायते; तन्तुकर्मणा विभागः, सामान्यज्ञानात् गुणज्ञानं–इत्युभयं एकदा भवति; विभागेन–संयोगनाशः अपेक्षाबुद्धिः द्वित्वोत्पत्तिः–इत्यपर्यायेण सम्पद्यते; संयोगनाशात् द्रव्यना(शः) द्वि(त्व)सामान्यज्ञानं च, ततो द्रव्यनाशात् द्वित्वादिनाशः, द्वित्वादिसामान्यज्ञानात् अपेक्षाबुद्धिनाशश्च; तदेवं आश्रयनाशात् द्वित्वादिनाशः स्यात् इति—तदपि प्रमाणप्राहाण्यात् प्रत्युक्तम् । न खलु यथोक्तायां प्रक्रियायां अस्ति लौकिकी प्रसिद्धिः । परीक्षकप्रसिद्धिस्तु प्रमाणा( भा )वे भ्रान्तिमूलत्वेनापि भविष्यति । न च अत्र प्रत्यक्षादीनां अन्यतमम् ? प्रमाणम् ।

सङ्ख्यासङ्ख्येयकासिद्धि( र )सिद्धेर्युक्तिमानयोः ।
व्यवहारस्तु तन्मात्रादुपपत्तिमुपाश्नुते ॥ ३१ ॥
परिमाणं च सङ्ख्यावद्द्रव्यभेदं न मृष्यति ।
प्रमाणव्यवहारोऽपि मृष्यते न निरूपणम् ॥

किञ्च, परिमाणं (१) गुणत्वे सति मानव्यवहारविषयः—इति चेत्, न; सङ्ख्या(यां) अतिव्याप्तेः, विशेषणस्य च सन्दिग्धत्वात्, पटादिस्वरूपस्यैव परिमाणत्वाङ्गीकरणात् । संवेष्टितपटस्वरूपदृष्टौ अपि परिमाणदृष्टेः नैवं—इति चेत्, न; पटाद्येक( देश )दर्शने तन्मात्रपरिमाणदर्शनात्, सर्वथा तदुपलम्भे च तदात्मनः तस्यापि तथाभावात् । अवयविनः सर्वात्मना उपलब्धिः अनिष्टा—इति चेत, परिमाणस्यापि तदात्मनः सर्वात्मना दृष्टिः अनिष्टा–इति तुल्यम् । प्रसारिते पटादौ उपरिभागे दृश्यमाने तन्निष्ठं परिमाणं एतावदिति निश्चितं—इति चेत्, तत् किमिदानीं तदुपलम्भे पटोपलम्भो न निश्चितः । उपरिभागोपलब्ध्या तथैव अधोभागमपि कल्पयित्वा तन्निश्चये तथैव इतरनिश्चयोऽपि भविष्यति; सङ्ख्यायां उक्तन्यायात्, इहापि धर्मधर्मिभावस्य दुर्भणत्वात् ।

कश्च मानव्यवहारो ?(१) हस्तवितस्त्यादिव्यवहारो वा (२) अणुमहदादिव्यवहारो वा (३) असर्वगतत्वव्यवहारो वा (४) परिमितमिति( °तत्व? )व्यवहारो वा । न आद्यः, तथाविधव्यवहारस्य (परमाणौ) पर(म)महति च अभावात् अव्याप्तेः । न द्वितीयः, तस्य सर्वपरिमाणसाधारणत्वाभावात् उक्तदोषात्, अणुमहदादिशब्देन परिमाणस्यैवाभिधानात् आत्माश्रयत्वात् । न तृतीयः, व्यापकपरिमाणे तदभावात् । न चतुर्थः, सङ्ख्यादौ अपि तदभावात् ।

(२) महत्त्वाणुत्ववृत्तिसाधारणगुणत्वापरजातीयविषयव्यवहारः तथा—इति चेत्, न; महत्त्वाणुत्वयोरप्रसिद्ध(त्वा)त्। न हि परिमाणाप्रसिद्धौ तदवान्तरभेदप्रसिद्धिः। एतेन—(३) महत्त्वाणुत्ववृत्तिसंयोगावृत्तिसामान्यं परिमाणत्वं, तदधिकरणं परिमाणं—इति पराकृतं, महत्त्वादेः अप्रसिद्धत्वस्य उक्तत्वात्।

यत्तु—परमाणुमनःसु नित्यं अणुत्वं—इति, तत् न, तत्परिमाणस्य मूर्तपरिमाणत्वेन घटपरिमाणवत् अनित्यत्वानुमानात्। न च अनित्याश्रयत्वाद्युपाधिः; साधनव्यापकत्वात्, सुखादौ च त्वन्मते साध्यव्याप्त्यभावात्॥ न च—अनित्यं अणुत्वं द्व्यणु(क)मात्रवृत्ति—इति युक्तं, त्र्यणुकादौ अपि तद्भावात्, मुख्ये च बाधकाभावात् उपचारायोगात्॥ एतेन ह्रस्वत्वं व्याख्यातं, अणुत्ववत् तस्यापि परमाण्वादौ अनित्यत्वात्; त्र्यणुकादौ च मुख्यत्वात्॥ न च—आकाशकालदिगात्मसु महत्त्वं नित्यं—इति युक्तं, तेषामपि परिच्छिन्नत्वेन घटादिवत् अनित्यपरिमाणवत्त्वानुमानात् त(न्ना)शस्य तेनैव हेतुना सुसाधत्वात्, एकरसात्मवादे च नैरात्म्याभावात्॥ एवं दीर्घत्वमपि प्रतिवक्तव्यं, तस्य महत्त्वेन तुल्ययोगक्षेमत्वात्॥ न च परमाणुद्वये प्राणिनिमित्तैकान्तविषयां अदृष्टोपष्टब्धां ईश्वरबुद्धिं अपेक्ष्य उत्पन्ना द्वित्वसङ्ख्या परमाणुभ्यामारब्धे द्व्यणुके अणुत्वह्रस्वत्वे जनयति परमाणुद्वयस्य तस्मिन् प्राणिनिमित्तैकान्तविषयापेक्षाबुद्धेः तदुत्थद्वित्वस्य द्व्यणुकस्य च अप्रामाणिकत्वात्। न च समवाय्यसमवा(यि)नोः अभेदकार्यं अदृ(ष्ट)मात्रेण भिद्यमानं उपपद्यते, अदृष्टस्य दृष्टमात्रसंवादित्वाङ्गीकारात् कार्यभेदे स्वातन्त्र्याभावात्। नापि पूर्ववत् द्व्य(णु)केषूत्पन्न बहुत्वसङ्ख्या त्र्यणुके महत्त्वदीर्घत्वे जनयति, दर्शितन्यायाविशेषात्। [illegible]न त्र्यणुकमहत्त्वदीर्घत्वाभ्यां तत्त्वाभ्यां तत्कार्ये महत्त्वदीर्घत्वयोरुत्पत्तिः व्या(ख्या)ता, आरम्भवादस्य अप्रामाणिकत्वात्। न च प्रशिथिलावयवसंयोगात् प्रचयात् तूलपिण्डद्वयारब्धे तूलपिण्डे महत्त्वदीर्घत्वयोः उत्पत्तिः, सङ्ख्यापरिमाणयोरपि तत्र सम्भवात्। कारणमहत्त्वाद्यविशेषेऽपि प्रचये सति कार्यमहत्त्वादौ अतिशयदर्शनात् न—इति (चे)त्, न; तूलपिण्डयोः संयोगमात्रं, न ततो द्रव्यान्तरं ताभ्यामारब्धं—इत्यभ्युपगमात्; अन्यथा विमतं न्यूनपरिमा(ण)वदारब्धं, कार्यद्रव्यत्वात्, पटवत्—इत्यत्र कार्यद्रव्यत्वहेतोः महत्परिमाणदुकूलद्वयसंयो(ग)द्वारा तदारब्धे रज्जुद्रव्ये व्यभिचारापातात्, उभयत्र विशेषानवगमात्; न्यायसाम्येन सर्वावयविनिरासप्रसङ्गस्य अस्माकं इष्टत्वात्। न च अवयविद्वितये क्वचित्प्रचये द्वयोःद्वयोः महत्त्वाविशेषो युक्तः, सति प्रचये तदाश्रयात् द्वयोः महत्त्वातिशय-

दर्शनात्, तदारब्धे तस्यैव कारणत्वसम्भवात्। यत्तु—परिमाणत्वं आश्रयनाशैकनाश्यवृत्ति, अविभुत्वे सति दिग्वृत्तिजातित्वात्, सत्तावत्—इति, तत् न; हेतोः आश्रयासिद्धत्वात् परिमाणत्वजातेः अपाकृतत्वात्, सत्तानङ्गीकार(वा)दे च दृष्टान्तस्य आश्रयहीनत्वात्॥ तदेवं—परिमाणमपि प्रातीतिकं, न प्रामाणिकं,—इति स्थितम्॥ ३२॥

पृथक्त्वं प्रथतेऽभावान्न पृथक्तना (°थक्त्वतया?) कथम्।
एकत्रापि द्विधादेशात्पञ्चमी नोपपद्यते॥

(१) गुणत्वे सति अन्यत्वव्यवहारविषयः पृथक्त्वं—इति चेत्, न, परस्पराभावात्मनः तस्य गुणत्वासम्भवे विशेषणायोगात्॥ न हि तस्य अन्योन्याभावातिरिक्तस्य सत्त्वे किञ्चित् मानं अस्ति, प्रतीतेः अभावविषयत्वेन अप(पि?)चरितार्थत्वात्, अपरथा गुणादिषु कथं पृथक्त्व(म्)। पृथ(क्त्व)रूपभेदोपचारात्—इति चेत्, न; परस्पराभावविषयतया मुख्यत्वोपपत्तौ तदयोगात्, अन्यथा स्वरूपभेदस्यैव लाघवेन तद्व्यवहारनिर्वाहकतया तदतिरिक्तपृथक्त्वाभावात्॥ अयं अयं न—इत्यन्योन्याभावप्रतीतेः इदं अस्मात् पृथगिति च पृथक्त्वप्रथनात् तन्नानात्वं—इति चेत्, न, प्रकारभेदेन एकस्यापि व्यपदेशभेदे अनेकस्यापि व्यपदेशभेदविषयत्वात्। यदा खलु अन्योन्याभावो भिन्नपृथक्त्वादिशब्देन व्यपदिश्यते तदा पञ्चम्यपेक्षया तत्प्रथा, यदा तु शब्दान्तरेण तद्व्यपदेशः तदा तदपेक्षामन्तरेणैव तत्प्रतीतिः इति व्यवस्थाप्यते। न हि पञ्चम्यपेक्षयैव पृथक्त्वप्रथानियमः, स्तम्भकुम्भौ परस्परं पृथगित्यपि तत्प्रथादर्शनात्। एकस्मिन्नेव चार्थे व्यपदेशभेदो भूयान(नु)भूयते, यथा चैत्रेण स्थीयते—चैत्रस्तिष्ठतीति। तस्मात् परस्पराभावः स्वरूपभेदो वा पृथक्त्वं, स्वरूपस्य प्रतियोग्यनपेक्षत्वात् इतद(रा?)पेक्षत्वात्। वैधर्म्यात् भेदः—इति चेत्, न; पृथक्त्वस्य स्वरूपात् पृथक्त्वं भेदश्चेत्—आत्माश्रयादिप्रसङ्गात्, अन्योन्याभावश्चे(त्)—तेनैव तद्व्यवहारसिद्धेः गौरवात् पृथक्त्वान्तरकल्पनानवकाशात्। स्वरूपत्वेऽपि स एव दोषः, स्तम्भकु(म्भा)दावपि स्वरूपेणैव भेदव्यवहारसम्भवे पृथक्त्वकल्पनाया निरवकाशत्वात्। न च तस्य स्वरूपात् अभावाच्च अतिरेकेऽपि गुणवत्त्वं, द्रव्यजातित्वसम्भवात्। जातेरपि प्रतियोग्यनपेक्षत्वात् न—इति चेत्, न; रूपादौ स्वरूपभेदात् पृथक्त्वोपचारवत् तज्जातावपि तेनैव सावधित्वोपचारात् तद्व्यक्तिषु तथात्वस्य प्रसिद्धत्वात्, द्रव्यत्वेन तुल्य(व्य)क्तितया तस्यैव अपलापप्रसङ्गात्। नियामकाभावे

ऽपि द्वयोः असत्त्वापत्तेः सर्वत्र वा तद्व्यवहारात् द्रव्यत्वेन अतुल्यव्यक्तित्वम्। तथाऽपि न तज्जातित्वं, उत्तरत्रिकेऽपि तद्व्यवहारात्–इ(ति) चेत्, न; तत्रापि तज्जात्यङ्गीकारविरोधानुपलम्भात्, तदीयनिःसामान्यत्वस्य पारिभाषिकत्वात्। अनवस्थानात्, लक्षणैकदेशहानिलक्षणस्वरूपहानात्, व्यक्त्यभेदात् च, न उत्तरत्रिकस्य जातिमत्त्वं–इति चेत्, न; पृथक्त्वातिरिक्ते सर्वत्र तज्जात्यभ्युपगमेऽपि तत्रतत्र तत्तज्जात्यनभ्युपगमेन अनवस्थासमाधानात्, विशेषेषु च–लक्षणान्तरसम्भवेन स्वरूपहानाप्रसङ्गात्, समवाये च–व्यक्त्याः एकत्वेन समवायत्वासम्भवेऽपि जात्यन्तराङ्गीकाराविरोधात्, समवाये समवायाभावेऽपि जातेऽपि (जातावपि ?) जातेः संबन्धान्तरस्वीकारात्।

यत्तु—एकमेव द्रव्यं एकपृथक्त्वं, अनेकद्रव्यं द्विपृथक्त्वादि इति—तत् असत्—

पृथक्त्वे निर्गुणे सङ्ख्या न कथञ्चित्प्रसिध्यति।
एकत्वादेरसिद्धौ च तुल्याधारत्वगीर्मृषा॥

पृथक्त्वे सङ्ख्याभावात् एकं च तत्पृथक्त्वं च इति अयुक्तत्वात्। एकत्वेन समानाश्रयं पृथक्त्वं तथा—इति चेत्, न एकत्वस्य पृथक्त्वस्य च असिद्धौ तदसम्भवा(त्) पृथक्त्वादिसिद्धिः।

अन्योन्यमेव विश्रान्तैर्व्याहारव्यवहारयोः।
तैस्तयोरुपपन्नत्वाद्द्वित्वादेश्च निराकृतेः॥

अन्योन्यं विश्रान्तैः एकपृथक्त्वैरेव द्विपृथक्त्वादिव्याहारव्यवहारसिद्धेः न पृथक् द्विपृथक्त्वादि कल्प्यम्। न च द्वित्वादिवत् तत्सिद्धिः, तदनुपपत्तेः उक्तत्वात्॥ यत्तु–पृथक्त्वस्य जातिमत्त्वेऽपि न एकपृथक्त्वादेः जातिः अस्तीति–तत् न, एकपृथक्त्वाद्यनुगतबुद्धिविरोधात्, एकत्वादिना सहैकार्थसमवायोपाधेः। तदविरोधे पृथक्त्वेऽपि अन्योन्याभावोपाधिना तद्व्यवहारस्य सुवचत्वात् जातिमत्त्वासिद्धिः, एकत्वद्वित्वादौ च स्वरूपाभेदतद्भेदाभ्यां अनुगतव्यवहारसम्भवात् तत्तज्जातिमत्त्वासिद्धिः।

धीविरोधादुपाधेश्च पृथक्त्वेऽपि प्रसङ्गतः।
अतिप्रसङ्गतो नैकपृथक्त्वादेरपाक्रिया॥

तस्मात्—न पृथक्त्वं नाम किञ्चिदस्ति वस्तुभूतं—इति सिद्धम्॥ ३३॥

प्रमाणलक्षणाभावादुदयस्यानिरूपणात् ।
विनाशस्यापि तस्मान्न संयोगो युक्तिगोचरः ॥

कश्च संयोगो नाम? (१)युक्तप्रत्ययस्य असाधारणं निमित्तं—इति चेत्, न; विशिष्टप्रत्ययस्य विशेषणासिद्धौ असिद्धेः आत्माश्रयत्वात्, असाधारण्यस्य च प्रत्युदस्तत्वात्। (२)यद्विशिष्टे द्रव्ये संयुक्तं इदं अनेनेति प्रत्ययः स संयोगः इत्यपि—प्रदर्शितदूषणकवलितत्वात् अयुक्तम्। एतेन संयुक्तप्रत्ययस्य तत्प्रत्यायकत्वं प्रत्युक्तम्। (३)विद्यमानयोः अप्राप्तयोः प्राप्तिः असौ—इति चेत्, न; अप्राप्तिशब्देन संयोगाभावविवक्षायां आत्माश्रयतादवस्थ्यात्, प्राप्त्या च संयोगरूपया तन्निवृत्तौ तस्यैव प्रसङ्गात्। समवायाभावः अप्राप्तिः समवायश्च प्राप्तिः—इत्यभ्युपगमे—संयोगिनः तदभावेन असम्भवित्वात्, असंश्लेषः अप्राप्तिः संश्लेषश्च प्राप्तिः इत्युक्तेऽपि—दर्शितदोषाविशेषात्, समवायिनोः सतोः अप्राप्त्यभावे च तयोः नित्यसंबद्धत्वेन रूपाभावदशायामपि रूपिणि संबद्धत्वबुद्धिप्रसङ्गात्। प्रतियोग्यभावात् न—इति चेत्, तर्हि तदधीनसत्त्वा(°नत्वा?)त् कस्य कुतो नित्यत्वम्। वक्ष्यते चैतदुपरिष्टादित्यलम्। (४)संबन्धत्वे सति अव्याप्यवृत्तिः असौ—इति चेत्, न; संबन्धस्य संयोगत्वे समवायत्वे च स्वाश्रयत्वासम्भवित्वयोरापत्तेः, तन्मात्रत्वस्य च विशेषे दुर्वचत्वात्। न हि सामान्यमेव स्यात्। अव्याप्यवृत्तित्वं च स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वम्। तच्च एकत्र एकस्य(भावा)भावयोर्विरोधात् अयुक्तं, अवयवभेदात् दिग्भेदाच्च अविरोधिनिरवयवद्रव्येषु तदसिद्धेः। (५) द्रव्यासमवायिवृत्तिगुणत्वा(वा)न्त(र)जातीयः संयोगः—इति (चे)त्, न; द्रव्यस्य तदसमवायिनो गुणत्वस्य च अप्रसिद्धत्वात्, द्रव्यासमवायिशब्देन च संयोगस्यैवोक्तेः आत्माश्रयत्वात्, तदतिरिक्तस्य च तदसमवायिनोऽप्रसिद्धत्वात्; उक्तावान्तरजातिश्च न, संयोगत्वात् अनर्थान्तरमिति तस्यैव लक्षणत्वे परस्पराश्रयत्वात्। (६) अनित्यः संबन्धः संयोगः—इति चेत्, न, नित्यसंयोगे अव्याप्तेः; आकाशं आत्मना संयुज्यते, संयोगित्वात्, घटवत्—इति तत्सिद्धेः, विभागित्वस्य तु असर्वगतत्वे सति असिद्धेः। मूर्तमात्रयोगित्वं तत्—इति प्रक्रियामात्रं, अशब्दार्थत्वात्। वस्तुना(तः?)अजसंयोगोऽस्ति, आत्ममात्रस्य नित्य(त्वा)त् तस्य असंयोगस्य केनचिदपि संयोगायोगात्; तथाऽपि तदङ्गीकारपक्षे—पूर्वोक्ताव्याप्तेः व्यक्तत्वात्, भावमते—नित्यसंयोगस्य अभीष्टत्वात् उक्ताव्याप्ते(र्दु)र्वारत्वात्।

न च संयोगे प्रमाणं, प्रत्यक्षस्य प्रतिक्षिप्तत्वात्। कार्यद्रव्यं असमवायि-

जन्यं, कार्यद्रव्यत्वात्, पटवत्–इति चेत्, न, पटस्यापि तज्जन्यत्वासंप्रतिपत्ते- दृष्टान्तस्य साध्यविकलत्वात्। एतेन कार्यलिङ्गकं अनुमानं अपास्तम्। परिणामवादे विवर्तवादे च अन्तरेण असमवायिकारणं तत्तत्कार्योत्पत्तेः अभ्युपगमात्।

न च (७) अन्यतरसंबन्धिसमवेतकर्मासमवायिकारणकः संयोगः–सम्भवति, संबन्ध्यन्तराप्रतिनियमप्रसङ्गात्। तथापि च कथं श्येनसंबन्धप्रतियोगित्वं स्थाणवादेः आस्थीयते। न हि विभागयोग्यतया तत्रैव तत्प्रतिनियमो युक्तः, तद्योग्यताङ्गीकारे च तयैव सर्वत्र सम्भवे कारणान्तरकल्पनानर्थक्यम्। एतेन उभयकर्मजोऽपि संयोगो निरसनीयः। मल्लयोः मेषयोः वा प्रतिद्रव्यं कर्मसत्त्वेऽपि कुतः तयोरेव संयो(गो) मिथः स्यात्—इत्युक्ते, तद्योग्यताया नियामकत्वे तद्बलादेव तत्सिद्धिसम्भवात्। न च तन्तुकेशसंयोगा(त्) तन्तुकेशसंयोगः, तज्जनकस्यैव तज्जनकत्वसम्भवात्। कर्मणः संयोगत्वा(°योगा)सातत्यात् आद्यसंयोगव्यवहितोत्तरसं(यो)गस्य कुतः तज्जन्यता–इ(ति) चेत्, न, द्वयोः तुल्यकालत्वोपपत्तेः। केशसंयुक्तस्य तन्तोः तन्त्वन्तरसंयोगद्वाराद्वितन्तुकारम्भे तस्य केशसंयोगदर्शनात् न–इति चेत्, न, केशस्यापि तन्तुसंयुक्तस्य तन्तुवत् चित्रद्वितन्तुकारम्भाय तत्संयोगात्। केशापकर्षेऽपि द्वितन्तुकाविनाशात् न– इति चेत्, न; तदपकर्षे चित्रद्वितन्तुक(स्य)विनाशात्, पटे च तन्तुमात्रापकर्षेऽपि विनाशादर्शनात्, खण्डावयवित्वं तुल्यम्। न च तन्त्वोः आकाशसंयोगाभ्यां द्वितन्त्वाकाशसंयोगः, तत्रापि सम(वा)यसम्भवेन जन्यजनकत्वव्यवस्थायोगात्। आकाशेन प्रत्येकं संयुक्तयोः तन्त्वोः मिथःसंयोगद्वारा द्वितन्तुकारम्भकत्वात् नैवं–इति चेत्, तर्हि संयुक्ततन्तुवदाकाशस्यापि तद्द्वारेण आरम्भकत्व सम्भवात् न द्वितन्तुकसंयोगः। आकाशस्य द्रव्यासमवायित्वात् न–इति चेत्, न, नियामकाभावात्, तदारब्धद्रव्यादर्शनस्य उक्तन्यायपराहतत्वात्। एतेन तन्तुभिः तुरीसंयोगेभ्यः तुरीपटसंयोगो व्याख्यातः, तुरीतन्तुसंयोगवत् तुरीपटसंयोगस्यापि कर्मारभ्यत्वसम्भवात्, पटे तदभावे पीतरक्ततद्भावोपलम्भात्, तस्य च स्वाश्रये युगपदुभयसंयोगारम्भकत्वसम्भवात्। तुरीसंयुक्ततन्तुभिः मिथःसंयोगेन पटारम्भे तुरीपटसंयोगदर्शनात् नैवं–इति चेत्, तथापि तुरीतन्तुसंयोगस्यै(व) तन्तुभिरारब्धपटे तुरीपटसंयोगित्वेन व्यवहारात् उक्ततन्त्वतिरिक्तपटाभावात् न संयोगः संयोगं जनयेत्। न च–एकस्मात् पार्थिवाप्यपरमाणुद्वयसंयोगात् तुल्यजातीयपरमाण्वन्तरसंयोगद्वारा तदारब्धपार्थिवाप्यद्व्यणुकद्वये द्वौ संयोगौ—इति युक्तं, प्रमाणाभावात्। यथोक्तपरमाणुद्व्यणुकसंयोगः कार-

गाकाग्णमंयोगा(दे)रन्यः, संयोगत्वे सति अकर्मजत्वात्, संपतिपन्नवत्–इति चेत्, न; प्रागुक्तन्यायेन विशेष्यस्य असिद्धत्वात्, (आकाशे)न संयोगे च व्यभिचारात्, तस्य च साधितत्वात्, पक्षभेदे च उक्तस्य व्यभिचारस्य युक्तत्वात्, परमाणु(द्वयणु)कयोरप्रसिद्ध्या च विशिष्टस्य धर्मिणोऽसिद्धत्वात्। एतेन हेतुविशेषणं अपि प्रत्युक्तं, तन्तुकेशसंयोगस्य प्रत्यादिष्टत्वाच्च दृष्टान्तस्य अभावात्॥ पार्थिवद्व्यणुकं आप्येन परमाणुना संयुज्यते, तदकार्यत्वात्, संप्रतिपन्नवत्–इति चेत्, न; पार्थिवपरमाणुपरिस्पंदादिना व्यभिचारात्, द्रव्यत्वेन विशेषणेऽपि पटादौ दृष्टान्ते साध्यसाधनविरहात्। न हि पटादेः आप्यपरमाणुसंयोगित्वं तदकार्यत्वे सति तत्संयोगिकार्यत्वं च निश्चितम्। सामान्यव्याप्तौ अपि द्व्यणुके पटादौ च अनुगतसामान्याभावात् एष एव दोषः; पार्थिवद्व्यणुकादेः अप्रसिद्ध्या च आश्रयासिद्धिः अप्रसिद्धविशेषणत्वं च। न च संयोगस्य सर्वप्रका(रा)र्थसमवेतात् विभा(गा)त् विनाशः, सति संयोगे तदप्रवृत्तेः, प्रवृत्तौ च तन्निवृत्तेः इतरेतराश्रयत्वात्, प्रकाशेन तमोनिवृत्तेस्तु दृष्टत्वात् एव इष्टत्वात्। न च अत्रापि दृष्टिः एष्टव्या; तदनुसारेण सर्वत्रापि व्यवहारे तस्याः सावकाशत्वेन यौक्तिकत्वव्याघातात्।

यत्तु उच्यते–यदा द्वितन्तुकसंयुक्तं क्रियारहितं अवतिष्ठते–क्रियावत् चेत् तज्जन्यविभागेन संयोगनाशो विधान्तरासम्भवात्, तदा तन्त्ववयवे अंशौ कर्म, तेनायस्यांरंशतरा(तेन अंश्वन्तरा?)त् विभागः, ततो द्रव्यारम्भकसंयोगनाशे तन्तुर्नश्यति, नष्टे तन्तौ तन्निष्ठतन्त्वन्तरसंयोगस्य निराश्रयस्य असम्भवात् नाशः, तन्तुनाशादेव द्वितन्तुकनाशे तन्निष्ठद्रव्यान्तरसंयोगस्यापि नाशः स्यात्–इति, तत् असत्, द्रव्यनाशस्य संयोगनाशस्य पौर्वापर्यानुपलम्भात् तन्नाशकात् एव तन्नाशसम्भवात्।

तदेवं प्रक्रियाप्राप्तः संयोगो न प्रकल्पते।
स चानिर्वचनीयत्वात् प्रतीतिशरणं गतः॥ ३४॥

कश्च विभागोऽभिमतः? (१) विभक्तव्यवहारासाधारणकारणं—इति चेत्, मैवम्।

आत्माश्रयान्निरस्तत्वाद्व्यभिचारोपलम्भनात्।
नाशादव्यतिरेकित्वादेकहेतुत्वसम्भवात्॥

न हि–विभागो विभक्तप्रत्ययस्य (अ)साधारणकारणं इति–युक्तं; विशे-

षणधियमन्तरेण विशिष्टधियो वक्तुं अशक्यतया, विभक्तप्रत्ययस्य विभागप्रत्ययसापेक्षत्वात् विभागसिद्धौ विभागसिद्धिः–इति आत्माश्रयत्वात्; असाधारण्य(स्य) च निरस्तत्वात्, पृथक्त्वे च व्यभिचारात्, तस्य विभक्तपर्यायत्वात्; इतराभावे च अतिव्याप्तेः तस्यापि तथात्वात्। उक्तं हि पृथक्त्वस्य परस्पराभावमात्रत्वम्। तथा च विभक्तशब्दस्य पृथक्त्वशब्दस्य च पर्यायत्वे–विभक्तव्यवहारे पृथक्त्वानतिरि(क्तत्वेन वि)शेषणासम्भवात्, विभागस्य च संयोगनाशाव्यतिरिक्तत्वेन लक्षणस्य असम्भवित्वात्। आश्रयनाशात् तन्नाशे विभागबुद्ध्यभावात् न–इति चेत्, न; सतोः संयोगनाशस्य अतथात्वात्। विभागस्य सावधित्वप्रतीतेः, अभावस्य अतथात्वात् न—इति चेत्, न, विभागाभावयोअभेदे तत्सावधित्वप्रतीतेः एव तत्सावधित्वप्रती(त)त्वात्। सावधित्वं च प्रतियोगिसापेक्षत्वं चेत्, अभावेऽपि तुल्यं; पञ्चमीनिर्दिष्टावधिमत्त्वं चेत्, विभागेऽपि नैतत् नियतं, अयं अनयोर्विभागः इति प्रयोगदर्शना(त्)। (२) संयोगसमानाश्रयत्वे सति संयोगविनाशको विभागः–इत्यपि न; नित्यप्रयत्नादौ अतिव्याप्तितादवस्थ्यात्; ययोः संयोगः तदुभयाश्रितत्वं संयोगसमानाश्रयत्वं–इति चेत्, तथापि संयोगनिरासात्, संयोगविनाशस्यैव विभागत्वाभिधानात् च। विभागानभ्युपगमे सति आश्रये कारणाभा(व)संयोगेन (°भावेन संयोग?)नाशस्यात्–इति चेत्, न, विभागकारणस्यैव त(त्)कारणत्वात्। गुणानां कर्मविनाश्यत्वादर्शनात् न–इति चेत्, न; विभागस्य कर्मजन्यत्वाङ्गीकारे (संयो)गनाशस्य तज्जन्यत्वाभ्युपगमध्रौव्यात् तस्य तन्नाशात् अतत्त्वान्तरत्वात् गुणस्यैव कारयसित् (कार्यं एतत्।?) कर्मनाश्यत्वेऽपि न का(चित्) क्षतिः। (३) (संयोगावृत्त्यनित्य)मात्रवृत्तिदिग्वृत्तिवृत्तिगुणत्वावान्तरजातीयो विभागः–इत्यपि न, (संयोगस्य निरा)करणात्, (द्वित्वादौ अतिव्याप्तेः) दर्शितजातीयत्वात्, अविभागात् च। (४) संयोगातिरिक्तत्वे सति कर्मासमवायिकारणको विभागः–इति चेत्, न; संयोगासिद्ध्या त(द)तिरिक्तत्वविशेषणासिद्धेः, संयोगान्तरे च अतिव्याप्तेः। संयो(ग)त्वजातीयेतरत्वं तदतिरिक्तत्वं—इति चेत्, तथापि तथाविधकतिपयव्यतिरिक्तव्यक्तिविशेषे तदवस्था अतिव्याप्तिः। तथाविधसमस्तव्यक्तिव्यतिरेकविवक्षायां अपि स एव दोषः, व्यक्तिविशेषस्यापि तथात्वात्। संयोगत्वानधिकरणत्वं संयोगव्यतिरिक्तत्वं इति चेत्, न, संयोगासिद्धौ संयोगत्वासिद्ध्या तदनधिकरणत्वस्य दुर्भणत्वात्, विभागे च अव्याप्तिप्रसङ्गात्।

न चात्वसिद्धो( चात्र सिद्धं? ) त्रैविध्यं निषिद्धं पूर्ववद्द्वयं ।
कर्मारभ्यत्वसंसिद्धेर्न तृतीयोऽपि लभ्यते ॥

न हि विभागे त्रैविध्यं सेद्धुं अर्हति, अन्यतरकर्मजोभयकर्मजयोः विभागयोः तथाविधसंयोगवत् अपाकरणसम्भवात् । न हि विभागयोग्यतावशादेव श्येनादौ तद्व्यवहारसम्भवे कर्मजन्यत्वं तयोः तत्र कल्पते, गौरवात् । नापि कारणमात्रविभागजो विभागः सम्भवति, तन्त्वोः मिथोविभागवत् तन्त्वाकाशविभागस्यापि कर्मारभ्यत्वसम्भवात् ।

ननु–द्रव्यारम्भकसंयोगविरोधिविभागारम्भककर्मातिरिक्तं कर्म द्रव्यानारम्भकसंयोगविरोधिनं विभागं आरभते, तदेव (वा); न आद्यः, आद्यकर्माविष्टे कर्मान्तरस्य अदृष्टत्वात्, अश्लिष्टत्वात् च; न द्वितीयः, तन्तुकर्मणोः द्रव्यारम्भकसंयोगविरोधिविभा(गा)नारम्भकत्वव्यापकव्यावृत्त्या तद्व्याप्यद्रव्यानारम्भकसंयोगविरोधिविभागारम्भकत्वव्यावृत्तेः–इति चेत्, नै(मै?)वम्; आद्यकर्माविष्टे कर्मान्तराभावेऽपि तस्मादेव आद्यविभागवत् द्वितीयविभागारम्भसम्भवात् । यदा हि तन्तुकर्मणा तन्त्वन्तरात् तन्तोः विभागः तदैव तन्तोः आकाशादिदेशान्तरात् विभागो जायते । न च यौगपद्ये हेतुफलभावो युक्तः, कर्मणश्च उभयत्र अविशेषदर्शितव्याप्यव्यापकत्वासिद्धौ कुतो व्यापकनिवृत्त्या व्याप्यनिवृत्तिः॥ कारणाकारणविभागजविभागस्तु तथाविधसंयोगजसंयोगवत् निरसनीयः ॥

न चात्र मानमध्यक्षं स्वाश्रयत्वप्रसक्तितः ।
नानुमानं समानत्वादसिद्धेश्चोक्ततत्त्वतः ॥

न हि विभागे किमपि प्रमाणं प्रभवति । न तावत् इदं अस्माद्विभक्तं इति प्रत्यक्षं अत्र प्रमाणं, विभागावगाहिप्रत्यक्षस्य तत्प्रमापकत्वे स्वाश्रयत्वध्रौव्यात् । न च तथाविधशाब्दव्यवहारो विभागं परिशेषात् अवगमयति, दर्शितदोषाविशेषात्, संयोगाभावस्य च तन्निमित्तत्वसम्भवे पारिशेष्याभावात् ॥ विमतं संयोगातिरिक्तासमवायिकारणं, संयोगातिरिक्तत्वे सति असमवायिकारणत्वात्, रूपादिवत्—इति चेत्, न, विशेषणासिद्धेः स्वरूपासिद्धेः, दृष्टान्तस्य उभयविकलत्वाच्च । न हि पक्षे विशेषणं असमवायिकारणं अनङ्गीकुर्वतां प्रसिद्धं अस्ति । संयोगस्य पुरस्तात् निरस्तत्वात्, तदतिरिक्तत्वविशेषणं हेतुसाध्ययोः न सिध्यति । असमवायिकारणनिराकरणादेव विशिष्टो हेतुः न स्वरूपेण सेद्धुं अर्हति । न च रूपदृष्टान्ते साध्यं साधनं वा संप्रतिपन्नं

आवयोः अस्ति, परिणामवादे विवर्तवादे च कारणरूपस्य असमवायिकारणत्वासिद्ध्या विशिष्टहेतुसाध्ययोः तत्र असिद्धत्वात् ॥ विमतः संयोगातिरिक्तासमवायिप्रभवः, असति एव संयोगे जायमानत्वात्, शब्दान्तरवत्—इति चेत्, न; प्रागुक्तन्यायेन परास्त(त)द्धर्मिणि विशेषणाप्रसिद्धेः, साधने च तदसिद्धेः इहापि तुल्यत्वात् । संयोगनाशस्तु विभागानतिरेकात् न तं अवगमयितुं अलं; न च अन्यतरकर्मजे विभागे प्रमाणं अपसर्पणं क्रियते वा श्येनेन । तद्विरहिणः स्थाणोर्विभागस्य प्रत्यक्षत्वात् नैवं—इति चेत्, न, तन्मात्रस्य अतिप्रसङ्गत्वेन तत्र अप्रमाणत्वात्, तद्विशेषस्य च प्रागुक्तात्माश्रयत्वेन तस्मिन् आश्रयत्वेन तस्मिन् मानत्वायोगात् ॥ एतेन उभयकर्मजे विभागे प्रत्यक्षप्रामाण्यं प्रत्युक्तं ॥ न च—आत्माकाशातिरिक्तं नित्यद्रव्यं विभागजगुणाधिकरणं, नित्यद्रव्यत्वात्, आत्मवत्—इति—विभागजविभागसिद्धिः; नित्यविशेषणात् आकाशातिरिक्तसिद्धौ आकाशातिरिक्तत्वविशेषणायोगात्, अनात्मनश्च अनित्यत्वाव्यभिचारात् आत्मातिरिक्तत्वनित्यत्वयोः व्याघातात्; नित्यं—इत्येव धर्मिनिर्देशाचत्वत्सतनभागो (र्देशे च तत्तत्पतनभागे?) सिद्धसाध्यतापातात्; परार्थत्वात् न—इति चेत्, तथापि निव्यद्रव्यत्वस्य च अनात्मनि असिद्धत्वात् आत्मनश्च गुणाधिकरणत्वासंप्रतिपत्त्या दृष्टान्तस्य साध्यसाधनविकलत्वात्; विवादाध्यासितं—इतिधर्मिनिर्देशेऽपि प्रागुक्तदोषाविशेषात् ॥ विमतं द्रव्यानारम्भकसंयोगविरोधिविभागारम्भकं न भवति, द्रव्यारम्भकसंयोगविरोधिविभागारम्भकत्वात्, यत् नैवं न तत् एवं यथा कमलदलविकसनकर्म—इति अनुमानात् तन्त्वाकाशविभागस्य तन्तुकर्मानारभ्यत्वसिद्धौ, परिशेषात्, तन्तुविभागस्य तदारम्भकत्व—इति चेत्, न; तन्तुविभागस्य तन्त्वाकाशविभागस्य च अपर्यायमेव उद्भवाभिधानेन हेतुफलभावासम्भवस्य उक्तत्वात्; विमतं कर्म द्रव्यानारम्भकसंयोगविरोधिविभागारम्भकं, कर्मत्वे सति आरम्भकत्वात्, कमलदलविकसनकर्मवत्—इति प्रत्यनुमानाच्च । विभागस्य कर्मैकजन्यत्वे तत्तुल्ययोगक्षेमस्य संयोगस्य अपि तदेकजन्यता स्यात्—इति चेत्, न, तथापि तथात्वाभ्युपगमात् । तर्हि प्रागुक्तपार्थिवाप्यद्व्यणुक(प)रमाणुसंयोगयोः आकस्मिकत्वं, तदाश्रये कर्माभावात्—इति चेत्, न, परमाणोः तत्संयोगस्य तज्जन्यद्व्यणुकस्य तन्निष्ठसंयोगस्य आद्यसंयोगद्वारा तदुपपत्तेश्च अप्रामाणिकत्वेन प्रत्युक्तत्वात् ॥ यत्तु—विमतो द्रव्यारम्भकसंयोगविरोधिविभागारम्भककर्मारभ्यो न भवति, द्रव्यानारम्भकसंयोगविरोधिविभागत्वात्, कमलदलविभागवत् इति—तत् न; द्रव्यानारम्भक-

संयोगवि(रो)धिनोऽपि विभागस्य कर्मारभ्यतायाः साधितत्वात्; विमतो विभागः कर्मणा जन्यते, विभागत्वात्, प्रथमविभागवत्—इति च प्रत्युक्ता(प्रस्य?)नुमानात् विभागस्य कर्ममात्रारभ्यत्वे प्रदर्शितातिप्रसङ्गस्य प्रत्युक्तत्वात् ॥ न च त्रिविधस्यापि विभागस्य उत्तरसंयोगावसानत्वं, ययोर्विभागः तयोरेव मिथःसंयोगे तन्नाशोऽपि तयोः अन्यप्रतियोगिकसंयोगे मिथोविभागस्य विनाशहेत्वभावात्, तावतैव कृतकार्यत्वात् । कर्मवत् तन्नाशः स्यात्—इति चेत्, न; तस्य तद्धेतुत्वे संयोगघातकत्वव्याघातात्, व्यक्तिभेदेन अविरोधे-जन्यव्यक्तेः तदविरोधेन अनिवर्तकत्वात्, विभागिनोः मिथोऽसंयोगे—यत्किञ्चिदुत्तरसंयोगस्य तन्निवर्तकत्वायोगात् ॥ यत्तु—तन्त्ववयवे अंशः अ(ङ्गी)क्रियते, अंशान्तरात् विभागः, तदैव तत्रैव तन्तौ कर्म, ततो विभागात् संयोगनाशः, तदैव तन्तुकर्मणा तस्यतस्य तन्त्वन्तरात् विभागः, ततः संयोगनाशात् तन्तुनाशः, तत्र आश्रयाभावात् तदुत्तरसंयोगायोगात् आश्रयनाशादेव विभागकर्मणी तन्तुगते नश्यतः इति—तत् न; अन्यतरतन्तुनाशेऽपि तन्त्वन्तराविनाशात् तन्निष्ठोत्तरसंयोगादपि तद्विभागविनाशसिद्धेः आश्रयनाशस्यैव तन्नाशकत्वायोगात्; प्रदर्शितप्रक्रियायाश्च अप्रामाणिकत्वात् ॥ यत् पुनः—उभाभ्यां विभागो विनश्यति, यदा तन्त्वंशौ कर्म तदैव तन्त्वन्तरेऽपि कर्म, यदा च अंशुकर्मणा अंशोः अंश्वन्तरात् विभागः ततश्च तत्संयोगनाशः तदैव तन्तुविभागात् तत्संयोगनाशः, अंशुसंयोगनाशात् तन्तुनाशः तदैव तन्त्वन्तरस्य देशान्तरसंयोगात् अनन्तरं तन्त्वोः विभागस्य आश्रयनाशात् उत्तरसंयोगात् च नाशः, तयोः तत्र प्रत्येकं क्लृप्तशक्तित्वात्, द्वयोः अपि प्रकृते दर्शनात्, अन्यतरमात्रस्वीकारे कारणाभावात् इति—तदपि न; अन्यतरविभागिविनाशात् विभागविनाशे अन्यतरावस्थानात् तदवस्थानस्यापि सुवचत्वात् । इष्टत्वात् न—इति चेत्, न; समवाययु(यानु?)पपन्नत्वात् तन्नित्यत्वस्य अग्रे निरसनात्, तस्य च अन्येन संयोगेऽपि विभागिना तदभावात् तद्विभागस्य निवृत्त्यभावात्, विभागिनः स्थितस्य विनाशिनो विभागिनो विभागाभावे तन्मात्रत्वेन तस्यापि विनाशित्वप्रसङ्गात् । न हि भागाभावो विभागोऽभेदात् अतिरिच्यते ॥

स्वरूपं जन्म तद्भेदो विनाशो वा न युज्यते ।
तस्यतस्याप्रमाणत्वाद्विभागो न (च) कल्पते ॥ ३५ ॥
आत्माश्रयादतिव्याप्तेः संयोगानतिरेकतः ।
परत्वमपरत्वं वा न मितेरनिरूपणात् ॥

न तावत् परत्वं निर्वक्तुं शक्यम् । (१) येन विशिष्टं द्रव्यं 'परं' इति व्यवह्रियते तत् परत्वं—इति चेत्, न; 'येन' इति सामान्योपक्रमे वाक्यशेषविरोधात्, सामान्यस्यैव विशेषत्वायोगात्, तस्य तत्पर्यवसानविवक्षायां अतिव्याप्तेः, रूपादिना विशिष्टे तद्व्यवहारात् तस्य तत्त्वप्रसङ्गात्; विशेषोक्तौ अपि यथोक्तदोषतुल्यत्वात्, परत्वस्यैव विशेषत्वात्—(इ)ति चेत्, स्वाश्रयत्वात्; 'परं' इति व्यवहारश्च 'परत्वोपेतं एतत्' इति व्यवहारः, तथा च सैव आत्माश्रयता । एतेन (२) येन विशिष्टं द्रव्यं 'अपरं' इति व्यवह्रियते तत् अपरत्वं—इति प्रत्युक्तं, आत्माश्रयत्वादेः अत्रापि तुल्यत्वात् । (३) कार्यद्रव्येण स्वसमवायिकारणकृतगुणत्वावान्तरजातीयं परत्वं—इति चेत्, न; स्वशब्दार्थाननुगमात् अव्याप्तिप्रसङ्गात्; तस्य च सामान्यत्वे—(अ)सम्भवित्वात्; तस्य विशेषार्थत्वेऽपि;जातीयग्रहणात् अनुगतौ—वक्ष्यमाणदोषात्; तस्य च तत्र तज्जनकत्वे—प्रमाणाभावात् ॥ कार्यद्रव्यं परमाणुवृत्त्यद्विष्ठगुणजनकं, मूर्तत्वात्, पार्थिवपरमाणुवत्—इति चेत्, न; द्व्यणुकासिद्धौ आश्रयासिद्धिप्रसङ्गात्, परमाणुवृत्त्यद्विष्ठगुणस्य च दृष्टान्तदार्ष्टान्तिकयोः एकजातीयस्य अभावेन अप्रसिद्धविशेषणत्वादेः दुरुत्तरत्वात्, परमाण्वसिद्धेश्च तस्यैव आपातात्, विशिष्टेन च गुणेन गुणत्वलक्षणावान्तरजातीयत्वस्य रूपादौ अपि भावात् अतिव्याप्तेः, तेन सह गुणत्वव्याप्यजातीयत्वविवक्षायां—तथाविधजातेः परत्वजात्यनतिरेकात्, तदधिकरणं तथा इति पर्यवसाने च—आश्रयत्वस्य दुर्वारत्वात् ॥

एवं(१)समवायिना स्वकार्ये क्रियमाणगुणेन गुणत्वावान्तरजातीयं अपरत्वं—इति परास्तं; स्वशब्दार्थाननुगमादेः उक्तदोषस्य अत्रापि व्यक्तत्वात्, जातीयग्रहणात् अनुगतौ अपि—गुणत्वापरजातिदूषणस्य दुर्वारत्वात् ॥ परमाणवः कार्यवृत्त्यद्विष्ठगुणजनकाः, मूर्तत्वात्, घटवत्—इत्यपि प्रत्युक्तप्रायं; परमाण्वप्रसिद्धेः आश्रयासिद्धिप्रसङ्गात्, दृष्टान्तदार्ष्टान्तिकयोः एकजातीयगुणाभावेन च प्राचीनदोषानुषङ्गात् ॥ न च सन्निकृष्टत्वासन्निकृष्टत्वे मुक्त्वा परत्वापरत्वे निरूप्येते, प्रमात्रपेक्षया पिण्डस्य सन्निकृष्टत्वादिवत् तदपेक्षया तस्यापि तदविशेषात् । पिण्डवत् प्रमातरि अपि तद्व्यवहारपातात् न—इति चेत्, न; सन्निकृष्टत्वादि निमित्तीकृत्य अपरत्वादिजन्मनि अपि तस्य मातरि मेये च अविशेषात्, मेये परत्वादेः उत्पत्तिः न मातरि—इति नियमायोगात् । कार्यानुसारेण कल्पनात् वैपरीत्यस्य अनवकाशात्—कुलालादौ सति एव घटाद्यभावात्, मेयवत् मा(त)रि परत्वाद्यप्रतीतेश्च नियमोपपत्तिः—इति चेत्, न, नैमित्तिका-

नुसारेण निमित्तकल्पने परापरव्यवहारस्य असन्निकृष्टत्वेऽपि न्यायसाम्यात् मेये परापरव्यवहारो न मातरि—इ(ति) व्यवस्थोपपत्तेः। प्रमातरि पिण्डापेक्षया सन्निकृष्टत्वादिव्यवहारेऽपि परत्वादिव्यवहारविरहात् अतिरिक्तं परत्वादि दुर्वारं–इति चेत्, न, तद्व्यवहारस्यैव तद्व्यवहारत्वात्। न हि–सन्निकृष्टत्वादेः अतिरिक्तं अपरत्वादि न–इति मते मातरि सन्निकृष्टत्वादिव्यवहारे तदितरव्यवहारो–निवारयितुं शक्यते, तस्य अनेकत्वाभावात्। तथा च (२) संयोगभेदापरपर्यायसन्निकृष्टत्वं अपरत्वं, तथाविधं विप्रकृष्टत्वं पर(त्वं)—इति व्यवहारगोचरता(°चरमात्रं इ?)ति आस्थेयम्॥

यत्तु–असमवायिकारणाभेदात् प्रत्येकं द्विविधस्य परत्वस्य अपरत्वस्य च क्षणिकत्वं अपेक्षाबुद्धिवशात् इति—तत् न; कथञ्चित् द्वैविध्येऽपि क्षणिकत्वे प्रमाणाभावात्। (वि)मतः बुद्धिजन्याकर्मयुक्ताद्विष्ठगुणाश्रयः, ज्ञानासमवायिकारणाधारत्वात्, आत्मवत्—इति चेत्, न, विशेषणानर्थक्यात्। परत्वापरत्वपरिशेषार्थं हि बुद्धिजन्यत्वादिविशेषणानि साध्ये प्रयुज्यन्ते, न च तत्परिशेषो लभ्यते, (त)योः अप्रसिद्धत्वात्। न च उक्तात् अनुमानात् तत्प्रसिद्धिः; विशिष्टानुमानात् तत्प्रसिद्धिः, तत्प्रसिद्धौ च तत्पारिशेष्यार्थं विशेषणस्य फलद्वारा विशिष्टानुमानसिद्धिः—इत्यन्योन्याश्रयप्रसङ्गात्, दृष्टान्तस्य च उभयविकलत्वात्। न हि यथोक्तगुणाश्रयत्वं मनस्संयोगाधारत्वं च आत्मनो निर्गुणात्मवादिभिः अभ्युपेयते। न च—अपेक्षाबुद्धिनाशात् दिक्पिण्डसंयोगनाशात् वा, द्रव्यनाशात् वा, द्रव्यापेक्षाबुद्ध्योः युगपत् नाशात् वा, द्रव्यसंयोगयोः अपर्यायं नाशात् वा, संयोगापेक्षाबुद्ध्योः यौगपद्येन नाशात् वा, त्रयाणां एकस्मिन्नेव क्षणे नाशात् वा, परत्वादि नश्यति—इति युक्तं; प्रामाणिकप्रक्रियामात्रेण विवक्षितार्थासिद्धौ अतिप्रसङ्गात्, असमवायिनः समवायिनो वा विनाशे कार्यानवस्थानेऽपि निमित्तविनाशेन तद्विनाशस्य अनियतत्वात्। न च असमवायिनाशेऽपि कार्यनाशो नियन्तुं शक्यते, तन्तुकर्मनाशेऽपि तज्जन्यतन्त्वन्तरसंयोगस्य स्थायित्वदर्शनात्॥

उत्पत्तेश्च विपत्तेश्च नानयोः सम्भवो यतः।
अतः साधारणा सिद्धिर्व्यवहारोपयोगिनी॥ ३६॥

का च बुद्धिः उच्यते?

अतिप्रसङ्गादेकत्वा(द)न्योन्याश्रयसक्तितः।
प्रमितेस्तत्र चासत्त्वात् कुतो धीरनवस्थिता॥

तथा हि न तावत्-( १ ) प्रकाशो बुद्धिः—इति श्रद्धेयं, प्रदीपादिप्रकाशे अतिव्याप्तेः । (२) ज्ञानं बुद्धिः—इति चेत्, न, पर्यायत्वात् । पृष्टे हि लक्षणे पर्यायवचनं अनुत्तरं, अतिप्रसङ्गात् ।

(३) ज्ञानत्वं लक्षणतया विवक्षितं—इति चेत्, न; ज्ञानव्यक्तिसिद्धया विना तदाश्रितज्ञानत्वासिद्धया परस्पराश्रयप्रसङ्गात्, तस्य च अमानत्वात् । सत्वं (तत्त्वं?) गुणत्वविशेषगुणत्वान्यत्वे सति यावज्ज्ञानवृत्तिजात्यन्यत्, जातित्वात्, गोत्ववत्—इति चेत्, न; सत्ताद्यसंप्रतिपत्तेः आश्रयासिद्ध्यादिप्रसङ्गात्, उक्तजातेश्च धर्मिणि ज्ञानत्वानतिरेकात् अप्रसिद्धविशेषणतादिदूषणतापात् । एतेन—ज्ञानत्वं अस्मदादिमानसप्रत्यक्षसमवेतं, ज्ञाननिष्ठजातित्वात्, सत्तावत्—इति प्रत्युक्तं, धर्मिदृष्टान्तयोः असंप्रतिपन्नत्वात् अनुमानानु(प)स्थानात् । घट(ज्ञान?) प्रत्यक्षं विशेषगुणत्वसाक्षाद्व्याप्यजातिमत्, विशेषगुणत्वात्, रूपवत्—इति न, विशेषणत्वासिद्धेः अप्रसिद्धविशेषणत्वादेः दुर्वारत्वात् । न च ज्ञानमानसप्रत्यक्षं सम्भवति, अनवस्थानात् । अदृष्टस्य कारणसामग्रीनियामकत्वात् न—इति चेत्, न, प्रथमज्ञानवत् द्वितीयतृतीयादिज्ञानेऽपि सामग्र्याः निरङ्कुशत्वात् । आद्येनैव ज्ञानेन अर्थव्यवहारसिद्धेः इतरत् व्यर्थं—इति चेत्, न, तद्व्यवहारहेतुतया तस्यापि सार्थ(क)त्वात्, स्वतः तद्व्यवहारे प्रथमस्यैव तथासम्भवेन ज्ञानभेदकल्पनानुपयोगात् ।

तस्मादसिद्धा बुद्धिस्ते व्यवहारो न लभ्यते ।
तदभावे विमूलत्वादमूलं हि फलं कुतः ॥ ३७ ॥

किञ्च—विद्याऽविद्याविभागेन बुद्धेर्द्वैविध्यमिष्यते ।
तथाऽविद्या कथं बुद्धिर्बुद्धया सा हि विरुध्यते ॥

केयं अविद्या नाम? (१)अयथार्थज्ञप्तिः—इति चेत्, न; व्याघातात्, ज्ञप्तिमात्रस्य यत्किञ्चिदर्थानुरोधित्वात् । (२)बाध्यार्था ज्ञप्तिः तथा—इति चेत्, न; विपर्ययादौ अपि प्रतीतितः अर्थबाधस्य असिद्धत्वात्, मानतः तद्बाधस्य स्तम्भाद्युपलम्भेऽपि तुल्यत्वात् । उपलभ्यते हि "नेह नानाऽस्ति" इत्यादिना स्तम्भकुम्भाद्युपलम्भस्यापि बाध्यार्थत्वं । न च अविद्यायाः ज्ञप्तित्वं युक्तं, तन्निवर्त्यत्वात् असम्यग्ज्ञप्तेः । सम्यग्ज्ञप्त्या निवर्त्यत्वं अविरुद्धं—इति चेत्, न, परस्पराश्रयप्रसङ्गात् । बुद्ध्यन्तरवत् तन्निवर्त्यत्वेऽपि बुद्धित्वसिद्धिः—इति चेत्, न, विरोधिगुणत्वस्य तत्र प्रयोजकत्वात् उत्तरेण ज्ञानादिना पूर्वस्य सुखादेः अपि निवृत्त्यभ्युपगमात् ।

भ्रमोपादानमज्ञानमन्यथा तदयोगतः ।
कौटस्थ्याज्ञात्मनस्तत्त्वमन्यथा तदयोगतः ॥
चातुर्विध्यमविद्यायां परसिद्धं न सिध्यति ।
प्रत्येकं संशयादीनां निरुक्तेरथ बाधनात् ॥

कश्च संशयः ? (१)विरोध्यनेकप्रकारवत्तया धर्म्यवलम्बी प्रत्ययः—इति चेत्, मैवम्—

प्रकाराणामनेकेषां विरोधस्यानिरुक्तितः ।
अतिप्रसङ्गाद्वैयर्थ्याद्विशेषणकथा कथम् ॥

तेषां विरोधसहानवस्थानत्वे युगपत् एकस्मिन् देशे काले च असम्भविनां एकप्रत्ययभोक्ता(क्त्र?)सम्भवेन असम्भवित्वात्, वध्यघातकभावस्यापि सह-भावविधुरेश्च(°धुरस्य?) सम्भवेन उक्तदोषात्, परस्परानात्मत्वस्य च अनेकत्वविशेषणसामर्थ्यादेव सिद्धौ पुनरुक्तिप्रसक्त्या विशेषणवैयर्थ्यात्; तथाविधप्रकारवत्त्वं धर्मिणि प्रत्यये वा–सर्वथाऽपि चित्रप्रत्यये अतिव्या(सेः, तथावि)धप्रकारसंस्पर्शी प्रत्ययः तथा इति उक्ते च अतिप्रसङ्गाभावात् 'धर्म्यवलम्बी' इत्यस्य अनुपयो(गा)त् । एतेन (२)परस्परविरुद्धार्थावमर्शः संशयः—इति निरस्तं, शब्दानित्यत्वानुवादेन तन्नित्यत्वनिश्चयस्यापि संश(य)त्वप्रसङ्गाच्च । न च—(३)अनिश्चयः विरुद्धकोटिसंस्पर्शी संशयः—इति युक्तं; विरोधस्य पूर्ववत् निर्वचनानर्हत्वात्, अनिश्चयस्य च निश्चयाभावत्वे–संशयेन सामानाधिकरण्यासम्भवात्, तस्य भावत्वाभ्युपगमे—निश्चयेतरज्ञानत्वे च—तावतैव चरितार्थत्वात् इतरानर्थक्यात्; निश्चयस्य सम्यग्ज्ञानत्वे—संशयविपर्ययाभ्यां अर्थान्तरस्य तथाभावात् इतरेतराश्रयात्, संशयेतरज्ञानत्वेऽपि—तस्य तादवस्थ्यात् । एतेन–(४) अनवधारणज्ञानं संशयः–इति प्रत्युक्तम् ।

भावाभावविरोधित्वादेकाधिकरणश्रुतेः ।
निश्चयेतरधीत्वे च परस्प(र)समाश्रयः ॥

(५) पाक्षिककोटिद्वयसंस्पर्शिनी असौ—इति चेत्, न, पाक्षिकत्वस्य कोटिद्वयस्वरूपत्वे अतीतोसदतत्प्रतीति(सदसत्प्रतीति?)प्रसङ्गात् । तद्धर्मत्वेऽपि तदभिन्नत्वे—दर्शितदोषात्, भिन्नत्वे—तद्धर्मत्वायोगात् । (६) वाशब्दोल्लिखितत्वं तत्—इति चेत, न, (त)स्यापि पूर्ववत् निरस्यत्वात् ॥

तज्जातिमत्त्वं तत्त्वं चेदुक्तं दूषणमापतेत् ।
धर्म्यंशे सङ्कराज्ञापि तज्जातिरवकल्पते ॥

(७) संशयत्वजातिः-अपि न तल्लक्षणं; तज्जातिसिद्धौ संशयव्यक्तिसिद्धिः, तथा तल्लक्षणात् तद्व्यक्तिसिद्धौ च तज्जातिसिद्धित्वप्रमात्वयोः सङ्करे तद्बाधितायाः तज्जातेः अभ्यु(प)गन्तुं अयुक्तत्वात्।

न पञ्चधा न च (त्रिधा) तदैकध्यस्य सिद्धितः।
अवान्तरविभागो यन्न सिध्येद्भेदकादृते॥

न हि संशयस्य समानधर्मानेक(ध)र्मविप्रतिपत्त्युपलब्ध्यनुपलब्धिकारणभेदात् पञ्चधात्वं; सामग्रीभेदस्य असिद्धत्वात्, समानधर्मस्यैव सर्वत्र आत्ममनःसंयोगसध्रीचीनस्य संशयप्रभेदे सामग्रीत्वसम्भवात्, एकप्रकारत्वेऽपि तद्व्यक्तिभेदस्य तद्व्यक्तिभेदादेव उपपन्नत्वात्। एवं तत्त्रैविध्यमपि प्रतिवदितव्यम्।

तदैकध्यं कुतो जातेरभावाद्व्यक्तिभेदतः।
अविद्याविद्यमानोऽयं व्यवहाराय कल्पते॥
कार्यभेदादभेदो हि सामग्र्या नोपपद्यते।
(स एव?) तद्भिदाहेतुस्तस्यास्तेनैव कल्पनात्॥ ३८॥
विशेषणस्य दौर्घट्यादिनगेनगर्भप्रगात्।
स्वप्नव्यावृत्त्ययोगाच्च विपर्यासो न सिध्यति॥

न तावत्-(१) अयथार्थं निश्चयात्मकं जाग्रज्ज्ञानं विपर्य(यः)-इति युक्तं, यथाज्ञानज्ञेयसत्तापक्षे-विशेषणस्य असिद्धत्वात्, ततोऽपि तस्य बाध्यत्वे व्याघातात्; सत्त्वबाधयोः भिन्नदेशत्वे च क्वचिद्बाधितस्य अन्यत्र सत्त्वप्रापकाभावात्, भ्रान्तेः तत्रैव सत्त्वावेदकत्वात्, बाधस्य च तदपहारेणैव पर्यवसितत्वात्, वास्तवसत्त्वाभावेन वा व्याघाते-तथाविधं अयथार्थत्वं परेण वक्तुं अयुक्त(क्तं?) व्याता (व्याघाते?) वादा(बाधा)नुवादाप्रसङ्गात्, तत्काले च बाध्यत्वस्य सिद्धत्वात्, कालान्तरे तद्भावस्य अनियतत्वात्, तथाविधस्य बाधस्य अविपर्यासेऽपि शङ्कितत्वात्। न च-निश्चयात्मकमिति संशयव्यावर्तकं विशेषणं-उचितं, संशयस्य अनिर्धारणात्मनो निर्धारणापरपर्यायनिश्चयसिद्ध्यधीनसिद्धितया परस्पराश्रयप्रसङ्गात्। न च-जाग्रज्ज्ञानमिति विशेषणं—युक्तं, स्वप्नस्यापि विपर्यासान्तर्भावस्य वक्ष्यमाणतया तद्व्यावृत्त्ययोगात्॥ (२) अतस्मिन् तत् इति प्रयो(गो) विपर्ययः—इति चेत्, न; सर्वनाम्ना—सामान्यनिर्देशे—लक्षणस्य असम्भवित्वात्, न हि सर्वस्मिन् अधिष्ठाने सर्वं आरोप्यते; विशेषनिर्देशे—व्याप्त्यभा(वा)त्। न खलु-अरजतं रजतं इति प्रथा-तथा। इति प्रथा तथा—इति कथं न सर्वविपर्ययानुगतिः।

सामान्ये सम्भवाभावात् विशेषे व्याप्त्यभावतः ।
अतस्मिंस्तदिति ज्ञानं न विपर्य(य)लक्षणम् ॥
तदतद्भावबुद्धे(द्धिः?)श्च भेदबुद्धिमपेक्षते ।
तद्धीनिरूपकाधीना तद्धीस्तद्धीनिबन्धना ॥

(३) परत्र परात्मना प्रतीतिः तथा-इति चेत्, न; निरूपकबुद्धेः भेदबुद्धेश्च परस्पराश्रयत्वेन पुरस्तादेव निरस्तत्वात्, घटे च पटापेक्षया पटात्मनि तदात्मना प्रतीतेरपि तथात्वेन अतिव्याप्तेः । आरोप्यात्यन्ताभाववति तद्रूपेण भानं अभिमतं—इति चेत्, न, आरोप्यस्य आरोपापरपर्यायविपर्ययनिरूप्यस्य तत्सिद्ध्यधी(न)तया परस्पराश्रयप्रसङ्गतादवस्थ्यात्। एतेन—(४) अन्यस्य अन्यात्मना प्रतीतिः तथा-इति निराकृतं, शुक्लः पटो नीलं उत्पलं इत्यादिप्रतीतेरपि विपर्य(य)त्वापातात् ।

अन्योन्याश्रयतादोषादतिव्याप्तेश्च सक्तितः ।
परत्रेत्यादिना नास्य विपर्यासस्य लक्षणम् ॥

(५) मिथ्याध्यवसायो विपर्ययः-इत्यपि न ।

मिथ्यार्थस्य विकल्पत्वादव्याप्त्यादिप्रसक्तितः ।
व्याघातादुक्तिवैयर्थ्यान्नेदं लक्षणमिष्यते ॥

तथा हि—मिथ्याशब्दस्य(१) असदर्थत्वं (२) अनिर्वाच्यार्थत्वं (३) बाध्यार्थत्वं वा ? न आद्यः; रजतादेः अपरोक्षस्य असत्त्वाभावात् बाधस्य सद्वैलक्षण्येन उपपन्नत्वात्, अन्यविषयत्वेन वा तस्य चरितार्थत्वात्। न द्वितीयः, परस्य अनि(र्व)चनीयाप्रसिद्धेः असम्भवित्वप्रसङ्गात् । न तृतीयः, आपाततः सर्वथा बाधस्य दुर्वचत्वेन उक्तदोषतादवस्थ्यात्। न हि रजतादिप्रतीतौ आपाततो बाध्यार्थत्वं सिद्धं अस्ति, तत्काले तद्बाधानधिगमात्। देशान्तरे कालान्तरे वा बाध्यार्थत्वं संप्रतितनसमीचीनज्ञानेऽपि सम्भावितं—इति कथं अतिव्याप्तिः न भवेत्। न हि कालान्तरादिवर्तिना(नो?) बाधस्य इदानीं अयोग्यत्वात् अभावो निर्धारयितुं शक्यते। अख्यातिमते मिथ्याध्यवसायपदयोः व्याहतत्वात् नेदं लक्षणम् । विपर्ययासमर्थने लक्षणोक्तिवैयर्थ्यम् । न च तदुक्तेः स्वार्थत्वं (सार्थवत्त्वं?), उक्तेः अप्रयोजकत्वात्। शिष्यं प्रति अर्थवत्त्वेन परमतेन प्रत्यवस्थाने तस्य पूर्वोक्तदोषानिवृत्तिः। तस्मात् न मिथ्याध्यवसायो विपर्ययलक्षणम् ॥

तज्जातिः संशयत्वेन समानत्वादपाकृता ।
न लक्षणमतोऽविद्या तद्रूपेण विजृम्भते ॥

अग्रहस्त(द)भावश्चेन्न तद्धेतुरसत्त्वतः ।
तदन्यत्वविरुद्धत्वसङ्ग्रहे नियमो न तु ॥

न च विवेकाग्रहो विपर्ययहेतुः, तस्य ग्रहाभावत्वे–अख्यातिपक्षे तदभावेन तदनुदयप्रसङ्गात् । न च पक्षान्तरेऽपि तस्य तद्धेतुत्वं, अत(सं?)दपेक्षया नियतपूर्वक्षणावच्छिन्न(स)स्वलक्षणकारणत्वायोगात्, अत्यन्तासत्त्वाभावात्, अभावस्यापि कण्टकाद्यभाववत् कारणत्वे तस्य भावत्वे—तद्धर्मत्वव्याघातात्, अभावत्वे–तत्रैव तद्भावानभ्युपगमा(त्) कण्टकाद्यभावस्यापि गमनादौ कारणतायाः दुर्निरूपकत्वात्, प्रतीतेः अप्रमात्वेऽपि–सम्भवद्योग्यानुपलब्धेः अभावकारणतायाः निरसिष्यमाणत्वात् । न च–अग्रहो ग्रहात् अन्यः तद्विरोधी वा–विपर्ययहेतुः, ग्रहादन्यस्य सर्वस्यैव ग्राह्यादेः तद्धेतुत्वापत्तेः, ग्रहविरोधिनश्च ग्रहादेः सर्वस्यैव तथात्वापातात् । तद्विशेषः तद्धेतुः–इति चेत्, न, तदनिर्देशात् ।

(६) मिथ्याग्रहः तथा–इति चेत्, न, तस्य कार्यत्वात् । (७) पूर्वो मिथ्याग्रहः तथाविधं उत्तरं प्रति तथा–इति चेत्, न; व्यवहितयोः तद्भावाभावात्; अव्यवहितत्वविशेषणेऽपि घटजातीयस्य घटजातीयप्रत्ययहेतुत्ववत् मिथ्याग्रहजातीयस्यापि तज्जातीयं प्रति हेतुत्वासम्भवात् मिथ्याशब्दार्थस्य निरस्तत्वात्॥

दोषोत्थोऽध्यवसायश्चेन्न स्वप्नेऽतिप्रसङ्गतः ।
नैकैकस्य समस्तस्य तदुत्थापकता मता ॥

न च–(८) दोषजन्यो विनिश्चयो विपर्यासः इति—युक्तं; वैशेषिकपरिभाषायां स्वप्ने अतिव्याप्तेः, दोषस्य च आश्रयभेदेन भूयस्त्वात् एकैकस्य तद्धेतुत्वे–रागादिद्वारा समुत्पन्नसुखादिधियोऽपि विपर्ययत्वप्रसङ्गात्, समस्तस्य तद्धेतुत्वे च–पीतशङ्खादिविभ्रमेषु अव्याप्तेः, समस्तत्वस्य च समुदायापरपर्यायस्य समुदायिषु अन्तर्भावानन्तर्भावाभ्यां दुर्भणत्वात् । एतेन—(९) कारणत्रितयजनितं विज्ञानं तथा—इति प्रत्युक्तं, दोषसंस्कारसंप्रयोगसमुदायस्य दुर्वचत्वात् ॥

तस्मादस्माभिरुक्तैवक्तव्यं (°क्तैवाविद्या ?)कारणतामिता ।
अविद्या विद्यते भ्रान्ते यस्मान्नान्यत्तथाविधम् ॥ ३९ ॥

(१) 'किमिदं' इत्यालोचनमात्रं अनध्यवसायः–इति अयुक्तम् ॥ तथा हि
किमर्थस्यासमर्थत्वादनर्थत्वाच्च मात्रत्व(°त्रचः?) ।
अन्तर्भावाद्धि संशीनावत्यापत्तेः स पूर्ववत् ॥

'किं'शब्दस्य आक्षेपकुत्सयोः अन्यतरार्थत्वे—हेतोः वक्तव्यत्वात्

तदनुक्ते(:) न्यूनत्वं, वितर्कार्थत्वेऽपि-कोट्यन्तरस्य निर्देष्टव्यत्वात् तदनिर्देशे स एव दोषः; प्रश्नार्थत्वे—तदर्थे ज्ञाते जिज्ञासोपशान्तेः तदयोगः, अज्ञाते तदर्थे जिज्ञासानुदयादेव तदसिद्धिः । आलोचनमात्रमिति च मात्रत्वनिर्णयपर्यन्ता मीमांसा निरस्यते; तथा च अनध्यवसायस्य अनिर्धारणरूपन्नायास्तयामवकंठोक्तान्न (अनिर्धारणरूपत्वात् कण्ठोक्तात् न ?°रूपं नापास्तं, तव क०?) संशयादर्थान्तरत्वं, अन्यथा पुनरूहस्यापि तथैव अर्थान्तरत्वप्रसक्तौ अविद्यानुविध्या(द्या?)सिद्धि(:) (अविधेरनु विध्यसिद्धिः?)। तस्मात् अनध्यवसायस्य संशयात् ऊहवत् अनर्थान्तरत्वात् तन्निरासादेव निरस्तत्वात् न असौ पृथक् निरसितव्यः । अनेकप्रकारवत्त्वाभावात् न संशयान्तर्भा(वः)-इति चेत्, न, किंशब्दसामर्थ्यात् अनेकप्रकारवत्त्वलाभात्।

(२) विरुद्धकोटिसंस्पर्शशून्योऽनिश्चयः अनध्यवसायः-इत्यपि न ।

अनिश्चयात्मकत्वेन तदन्तर्भावसम्भवे ।
विधान्तरं न कल्प्येत गौरवादतिसक्तितः ॥ ४० ॥

स्वप्नो नाम (१) निद्रादुष्टमनोजन्यं ज्ञानं-इति अयुक्तम् ।

विशेषणस्य वैयर्थ्या(त्) ज्ञानवत् कारणस्थितेः ।
(भानादे)रविशिष्टत्वात् बाध्यबाधभिदा कुतः ॥

सर्वस्यापि जन(न्य?)ज्ञानस्य सदोषेण विदोषेण वा मनसैव जन्मनियमात् मनोविशेषणस्य अकिञ्चित्करत्वात् न विशिष्टं लक्षणं आदेष्टुं शक्यम् । बाह्यकरणनिराकरणार्थं विशेषणं—इति चेत्, न, तस्यापि ज्ञानवत् भानाविशेषात् तथैव स्थितेः एष्टव्यत्वात्। उत्थितस्यापि भानात् अबाधितं ज्ञानं-इति चेत्, न, करणादेरपि प्रत्यभिज्ञानात् अबाधाविशेषात् ॥

जाग्रद्बोधेन बाधस्य तुल्यत्वान्न विभागधीः ।
ज्ञेयबाधे कथं ज्ञानमबाध्यमुपगम्यते ॥
तत्काले नेष्यते भेदो यदि कालान्तरे मतः ।
जागरेऽपि तथाभावो मानयुक्त्युपलम्भनात् ॥
स्वप्नशब्दो यथा स्वप्ने तथा तत्र प्रयुज्यते ।
दृश्यत्वादेश्च तुल्यत्वात् तुल्यं द्वयमुपेयताम् ॥

न च तस्य मनोजन्यत्वं; तस्यैव तत्तद्रूपेण प्रतीयमानत्वोपगमात् रजतादिबोधतुल्यतया वा अस्य विपर्यासान्तर्भूतस्य तन्निरासादेव निराससिद्धौ पृथक् तदुपन्यासासिद्धिः, कारणदोषबाधयोरपि विशेषात् ।

तस्मादविद्यासम्भूतं स्वप्ने द्वैतमुपेयते ।
तद्दृष्टान्तादतो द्वैतं जागरेऽपि मृषा मतम् ॥

यत्तु—कार(ण)भेदात् त्रैविध्यकल्पनं—तत् असत्; संस्कारपाटवस्य वा- तादिधातुदोषस्य अदृष्टस्य च अवान्तरभेदेऽपि तत्रतत्र उपादानभूतदु(दु?)- ष्टविद्यैकरूप्यात् सामग्रीभेदाभावात्, कारणभेदमात्रेण च कार्यभेदस्य अतिप्र- सङ्गित्वात्, व्यक्तिभेदस्य च आनन्त्ये तत्त्रैविध्यवाचोयुक्तेः रिक्तत्वात् ॥

प्रमाणाभावतो नैव स्मृतिः स्वप्नोत्थधीरियं ।
संस्कारजन्यतादिस्तु व्यभिचारान्न साधनम् ॥

न तावत् अस्य संस्कारजन्यत्वेन स्मृतित्वं; प्रत्यभिज्ञायां व्यभिचारात् तन्मात्रजन्यत्वस्य असिद्धत्वात्, वातादिनाऽपि तज्जन्माङ्गीकारात्, मानेतरत्वे सति संस्कारजत्वस्यापि—इतरेतराभावानङ्गीकारपक्षे विशेषणासिद्धत्वात्, अपरोक्षत्वाच्च (अ)स्य स्मृतित्वासम्भवात् ॥

अविद्याजृम्भितस्वप्नो रजतादिमतिर्यथा ।
चातुर्विध्यमतो नास्य तत्तद्भावनिदानतः ॥ ४१ ॥

(१) यथार्थज्ञप्तिः विद्या—इति अयुक्तम्—

विशेषणस्य दुःस्थत्वात् द्वैराश्यानुपपत्तितः ।
स्मृतेरपि प्रमाणत्वात् प्रमायाश्चानिरूपणात् ॥

न हि—यथार्थेति(वि)शेषणं अविद्याव्यवच्छेदार्थं अर्थवत्—इति युज्यते; अविद्यायाः ज्ञप्तित्वस्य प्रत्युदस्तत्वात्, तस्याः तन्निरस्तत्वात् तत्त्वायोगात् अर्थानुसारित्वस्य च यथार्थशब्दार्थत्वे विपर्यासादौ अतिव्याप्तेः, अबाध्यार्थत्वस्य प्रत्युक्तत्वात् ॥ न हि—प्रतिभासतः सर्वथा वा बाधविधुरार्थत्वं ज्ञप्तेः—युज्यते; प्रतीतबाधरहितार्थवत्त्वस्य विपर्यासादौ अपि सत्त्वात् सर्वथाबाधविधुरार्थत्वस्य सर्वत्रापि दुर्ज्ञानत्वात् । न च प्रमाणस्मृतिद्वैराश्यं विद्यायां उपपद्यते, स्मृतेरपि प्रमाणे अन्तर्भावसम्भवात् अज्ञातार्थज्ञापकत्वाविशेषात्, भूतार्थस्य अज्ञातार्थ- स्य इव तया ज्ञापनात् । गृहीतमात्रग्राहित्वं तु तस्याः तन्मात्रस्य अज्ञातस्यैव ज्ञापनेऽपि सिध्यति, तत्प्रामाण्यवादिना प्रमाणातिरेकस्येष्ट(त्वात्) ।

न च (१)—प्रमासाधनं प्रमाणं—इति युक्तं, प्रमायाः दुर्वचत्वात् ।

(१) अनुभूतिः सा—इति चेत्, न; तत्त्वस्य निरस्तत्वात्, स्मृतौ च अति- व्याप्तेः; यथार्थत्वेन अबाध्यत्वेन वा तत्त्वस्य निर्वचनेऽपि—दर्शितदोषाविशेषा-

त्; सम्यक्त्वेन-तन्निरुक्तौ अपि तुल्यत्वात्, तस्य च वक्तव्यत्वात्। स्मृतित्वानधिकरणं ज्ञानं अनुभूतिः-इत्यभ्युपगमात् न अतिव्याप्तिः-इति चेत्, न; नियामकाभावात्, स्मृतेश्च अनुभूतित्वानधिकरणज्ञानत्वेन इतरेतराश्रयात्। एतेन-(२) (अ)बाध्यार्थानुभवः (३) यथार्थानुभवः (४) सम्यगनुभवो वा प्रमा—इति लक्षणानि प्रत्युक्तानि।

साधनशब्देन च कारणग्रहणे-कालादौ अतिव्याप्तेः करणग्रहणे-तस्यैव विवेचनीयत्वात् कारकान्तरापेक्षायां-साधकतमत्वस्य दुस्साधत्वात्; तदनपेक्षायां-तद्वैयर्थ्यात्, कर्त्राद्यनपेक्षस्य करणस्य क्रियासाधकत्वानुपलम्भाच्च॥ न च—(२) अज्ञातार्थज्ञापकं प्रमाणं, स्मृतौ अतिव्याप्तेः उक्तत्वात्।

प्रमाया दुर्निरूपत्वात् न प्रमासाधनं भवेत्।
प्रमा नैव (हि) चा(ज्ञात)ज्ञापकं, प्रोक्तदोषतः॥
द्वैविध्यं न प्रमाणस्य प्रसिद्धिमुपढौकते।
श्रुत्यादेरपि सिद्धत्वादन्तर्भावेऽतिसक्तितः॥

न हि-प्रत्यक्षं अनुमानं (च) इति प्रमाणद्वैविध्यं-सिध्यति, तथैव आगमादीनामपि साधकत्वेन प्रसिद्धत्वात्। अन्तर्भावे पुनः अनुमानस्यापि प्रत्यक्षे तत्प्रतिपादनसम्भवात्, एकमेव प्रत्यक्षं प्रमाणं—इति मतं आपतति। प्रत्यक्षमेव हि लिङ्गव्यवहितं विप्रकृष्टवह्न्यादिबोधकं अभीष्टं; तत्रापि संयुक्तविशेषणतदे(षणे तत्?)सन्निकर्षस्य सुवचत्वात्, व्यवधानाव्यवधानाख्योम(°धानयोर?)ध्यक्षेणैव (त)त्सर्वाधिगतेः उपगमात्॥

किञ्च, प्रत्यक्षं साक्षात्कारियथार्थज्ञानसाधनं—इति चेत्, मैवम्—

आत्माश्रयादपास्तत्वात् तद्भेदस्यानिरूपणात्।
आत्मनोऽसन्निकृष्टत्वात् तत्प्रमाणासमीक्षणात्॥

तथाहि—साक्षात्कारस्य प्रत्यक्षफलत्वात् तदसिद्धौ असिद्धेः आत्माश्रयत्वं, यथार्थत्वसाधनत्वयोश्च दुर्वचत्वात् असत्ता। ईश्वरप्रत्यक्षे च तथाविधज्ञाने तत्सा(ध)नत्वाभावेन अव्याप्ति(:।) फलविवक्षया तत्र प्रत्यक्षशब्दो न प्रमाणाभिप्रायेण-इति चेत्, न, तस्य सर्वसाधकत्वेन प्रमाणत्वाभ्युपगमभङ्गप्रसङ्गात्। प्रमितिविवक्षया प्रमाणशब्दः तत्र—इति चेत्, न, प्रमाणशब्दस्य अनेकार्थत्वायोगात्॥ न-तथाविधज्ञानमपि ऐश्वरं जैवं च इति द्विविधं-उपपद्यते।

प्रथमस्याप्रमाणत्वादप्रसिद्धविशेषणात्।
सिद्धसाधनताभावादनुमा (न प्रमा)ण(म?)ता॥

न तावत् ऐश्वरं ज्ञानं नित्यं अभ्युपगन्तुं शक्यं, प्रमाणाभावात्, तदीयसर्वज्ञताप्रसाधकाम्नायस्य स्वरूपचैतन्यं उपादाय अपि सुप्रतिपदत्वात्। एतेन "न हि द्रष्टुः" इत्यादि वचनमपि प्रतिनीतम्। अयं घटः एतद्घटजनकानित्यज्ञानेतरज्ञानजन्यः, कार्यत्वात्, पटवत्–इति चेत्, न; विशिष्टज्ञानस्य नित्यत्वे–अप्रसिद्धविशेषणतादूषणतापातात्, अनित्यत्वे च–सिद्धसाध्यत्वापाताच्च। न च साधारणं किञ्चन ज्ञानं प्रसिद्धं अस्ति॥ न च—अस्मदादिप्रत्यक्षं घटादिविषयं चतुष्टयसन्निकर्षजनितं–इति युक्तं, आत्मनोऽसंयोगात्, द्वितीयस्य केनचित् असन्निकर्षात्, कल्पिते तु सन्निकर्षे तत्कार्यस्यापि प्रसङ्गात्। एतेन–शब्दादिविषयं अस्मत्प्रत्यक्षं त्रयसन्निकर्षजन्यं, आत्मविषयं द्वयसन्निकर्षसमुत्थं—इति प्रत्युक्तम्।

न च–ईश्वरो जीवश्च इति भेदो–निरूपयितुं शक्यते, चेतनत्वाचेतनत्वयोः अतद्भेदकत्वात्, उक्तं चैतत् आत्माधिकारे; तद्भेदावेदकस्य च प्रमाणस्य अभावात्; विरुद्धे(द्ध?)धर्मवत्त्वस्य असिद्धत्वात् अनैकान्तिकत्वाच्च, कल्पिते भेदे—सिद्धसाधनात्, अन्यत्र–अप्रसिद्धविशेषणत्वात्।

न च—आत्मनि स्वप्रकाशे तद्विषयं प्रत्यक्षं—युक्तं, वेद्यत्वे घटादितुल्यत्वात्। नापि साक्षिवेद्ये सुखादौ अस्मत्प्रत्यक्षप्रवृत्तिः, तस्य च अबाधितप्रतीतिविशेषप्रतिपन्नत्वात्।

यत्तु—(१)वस्तुमात्रस्य अविपरीतस्य साक्षात् आलोचनं निर्विकल्पकं–इति तत् न।

सामान्यस्यैव वस्तुत्वे व्यर्थता मात्रचो, यदि।
विशेषस्यापि सैव स्यात् व्यभिचारोऽतिरिच्यते॥

तत्र वस्तुशब्देन सामान्यस्यैव सङ्ग्रहे मात्रचो वैयर्थ्यं, तद्ग्रहेणैव तदर्थग्रहात्। विशेषव्यवच्छेदो हि तदर्थः। यदि च अशेषोऽपि वस्तु, तथापि मात्रचो व्यर्थतैव दोषः। न च एकः शब्दः अनेकार्थः, न्यायविरोधात्; तदुभयग्रहश्च अस्ति सविकल्पकेऽपि इत्यतिव्याप्तिः। किञ्च अविपरीतत्वं—

यथार्थत्वमबाध्यत्वं सम्य(क्त्व)विद्यताऽथवा।
सर्वथा प्रत्युदस्तत्वात् तदसम्भविताऽऽपतेत्॥

किञ्च, आलोचनस्य साक्षत्वं(साक्षात्त्वं?) विवक्षितं—

संप्रयोगसमुत्थत्वं यदि, सोऽपि (वि)विच्यतां॥
षोढा चेत् कथमव्याप्तिः न प्रत्येकं प्रसज्यते॥

संप्रयोगजन्यत्वं चेत् आलोच(न)साक्षत्वं(साक्षात्त्वं?), तदा तस्यापि भूयस्त्वेन आनन्त्यात् अपार्थकं लक्षणं आपद्येत। संयोगादीनां षण्णां अन्यतमः संप्रयोगः-इति चेत्, तर्हि संयोगादिजन्यत्वस्य समवायादिजन्ये तज्जन्यत्वस्य च अन्यत्र अभावात् अव्याप्तिः।

योग्यता चेदसौ धर्मो योग्ये धर्मिणि वर्तते।
अनवस्थाऽन्यथायोगो न चेत्तत्त्वं न सिध्यति॥

संप्रयोगः संप्रयुज्यमानयोः योग्यता चेत्। तयोः असौ धर्मश्चेत्, तस्य योग्यधर्मिणि स्थितेः अनवस्था स्यात्; अयोग्यधर्मिणि कुतः तदवस्थानं, अतिप्रसङ्गात्। न च—योग्यता न धर्मः अपि तु स्वरूपमेव—इति युक्तं, तथैव तत्संप्रयोगत्वायोगात्।

यत्तु—एतच्चक्षुः एतच्चक्षुर्जन्यसविकल्पकातिरिक्तज्ञानजनकं, इन्द्रियत्वात्, मनोवत्—इति तत् असत्; एतच्चक्षुः एतच्चक्षुर्जन्यत्ववदतिरिक्तजं, इन्द्रियत्वात्, मनोवत्—इत्यपि प्रयोक्तुं शक्यत्वात्, व्याघातस्य निर्विकल्पकासिद्धौ तुल्यत्वात्॥

(२)शब्दाभिलापविकलं प्रत्यक्षं निर्विकल्पकं—इत्यपि न।

तन्मात्रस्पर्शशून्यत्वमसिद्धत्वादलक्षणम्।
यावद्वाचकसंस्पर्शशून्यत्वं गतमन्यतः॥

(३)यत्किञ्चिद्वाचकसंस्पर्शशून्यत्वस्य निर्विकल्पकेऽपि–वस्त्वादिशब्दसंस्पर्शवति संप्रतिपत्त्यभावात् कथमिदं लक्षणं, यावद्वाचकासंस्पर्शस्य सविकल्पकेऽपि सत्त्वात् कुतो न अतिव्याप्तिः। (४) विशेषानवग्राहि (विशेषानवगाहि?) प्रत्यक्षं निर्विकल्पकं—इत्यपि न।

अव्याप्तेर्यदि तन्मात्रं तद्गम्यमुपगम्यते।
विशेषे तर्हि तन्न स्यात् तत्पूर्वत्वसमन्वयात्॥

कुम्भादिनिर्विकल्पका(के अ?)व्याप्तेः इदं अ(ल)क्षणम्। तत्रापि सामान्यमेव अवगाहते निर्विकल्पकं—इति चेत्, न; तर्हि तत्र सविकल्पकमपि सम्भवेत्, तस्य निर्विकल्पकपूर्वकत्वात्।

(१)संज्ञासंज्ञिसम्बन्धोल्लेखेन ज्ञानोत्पत्तिनिमित्तं सविकल्पकं-इत्यपि न।

अतिव्याप्तेरतिव्यक्तेर्नेदं लक्षणमिष्यते।
विशेषणेऽपि तद्ध्रौव्यादन्यथा च तदागतः(तेः?)॥

कालादेः सर्वोत्पत्तिमन्निमित्तत्वात् उक्तया विधया ज्ञानोत्पत्तिनिमित्तत्वस्य तत्रापि भावात् अतिव्याप्तेः इदं अलक्षणम् । निमित्तशब्देन करणं अभिमतं—इति चेत्, तथापि यत्किञ्चित्संज्ञासंज्ञिसम्बन्धसमुल्लेखेन ज्ञानोत्पत्तिकरणत्वस्य निर्विकल्पकेऽपि भावात् अतिव्याप्तिः । संज्ञाविशेषस्य संज्ञिविशेषेण यः सम्बन्धः तदुल्लेखेन ज्ञानोत्पत्तौ करणं तथा–इत्युक्तेऽपि सैव निर्विकल्पकेऽतिव्याप्तिः, तत्रापि संज्ञाविशेषस्य संज्ञिविशेषेण सम्बन्धसमुल्लेखद्वारा ज्ञानोत्पत्तौ करणत्वस्य वक्तुं सुकरत्वात्; घटादिविशेषविवक्षायामपि तथैव अतिव्याप्तिः आपद्येत, तत्रापि निर्विकल्पकप्रत्यक्षाङ्गीकारात् । गोसदृशस्य पिण्डस्य गवयशब्दः संज्ञा–इति प्रतिपत्तौ, उपमानस्य प्रसक्तेः अविकल्पकेऽतिव्याप्तेः, उपन्यासात् विशिष्टविषये तथा चाक्षुषे सविकल्पके शब्दस्यापि करणत्वाङ्गीकरणात् च अतिव्याप्तिः अतिव्यक्ता । प्रत्यक्षत्वेन ज्ञानस्य विशेषणेऽपि, तस्य सविकल्पकत्वे—स्वाश्रयत्वं, निर्विकल्पकत्वे–व्याघातः, तन्मात्रस्य सामान्यातिरिक्तस्य अभावात् तदाधारज्ञानोक्तौ—अपि तुल्यम् ॥(२) शब्दसंजल्पविशिष्टं प्रत्यक्षं सविकल्पकं–इत्यपि न ।

शब्देऽपि चाक्षुषत्वस्य प्रसक्तेरविकल्पके ।
अतिव्याप्तेरुपन्यासात् विशिष्टविषये तथा ॥

चाक्षुषे सविकल्पके शब्दस्यापि विशेषणत्वेन चाक्षुषत्वप्रसङ्गात्, निर्विकल्पके च अतिव्याप्तेः उक्तत्वात् ॥ (३)विशिष्टवि(ष)यं प्रत्यक्षं तथा–इत्युक्तेऽपि यथोक्तदोषाविशेषात् न उक्तं लक्षणं युक्तम् ॥

प्रकाशदेशकालविशेषादृष्टेश्वरेच्छादिसाहाय्यात् इन्द्रियार्थसम्बन्धवि[illegible]षेण अस्मदादिप्रत्यक्षयोग्यस्य ग्राहकं अयोगिप्रत्यक्षं—इत्यपि न ।

उक्तं विशेषमाश्रित्य व्याप्तेर्वक्तुमयुक्ततः ।
आत्माश्रयत्वादव्याप्तेरयुक्ता लक्षणाभिधा ॥

प्रकाशविशेषादि समाश्रित्य अव्याप्तेः वक्तुं सुकरत्वात् अयुक्तं लक्षणम् । न हि सहायभूतस्य प्रकाशविशेषादेः इन्द्रियार्थसम्बन्धविशेषस्य च अस्मदादिप्रत्यक्षयोग्यार्थज्ञाने व्याप्तिः अस्ति, तत्रतत्र अस्मदादिप्रत्यक्षज्ञाने तस्यतस्य प्रकाशविशेषादिसहकारिणो विभिन्नत्वात् । अस्मदादिप्रत्यक्षशब्देन च अयोगिप्रत्यक्षविवक्षायां–आत्माश्रयत्वं, तस्यैव अधुना लक्ष्यमाणत्वात्; योगिप्रत्यक्षविवक्षायां—अव्यापकत्वं, तद्योग्यस्यापि परमाण्वादेः इतराग्राह्यत्वात् ॥

अस्मदयोग्यविषयं अनीश्वरप्रत्यक्षं योगिप्रत्यक्षं–इति अयुक्तम्—

विशेषण(स्य) दुष्टत्वादतिव्याप्तेश्च निश्चितेः ।
व्याहतेः स्वाश्रयत्वाच्च प्रमाणस्य प्रहा(ण)तः ॥

न तावत् अनीश्वरप्रत्यक्षं इति विशेषणं अनीश्वरवादे सम्भवति; सेश्वरवादेऽपि प्रथमविशेषणस्य अस्मदयोग्यविषयत्वस्य असम्भवित्वतादवस्थ्यं, अस्माकमपि सर्वत्र यत्किञ्चिन्मान(स)योग्यतायाः सत्त्वात् । अस्मत्प्रत्यक्षायोग्यत्वं विवक्षितं—इति चेत्, न, तद्योग्यस्यापि तेन विषयीकरणात् । तदयोग्यस्यापि विषयीकरणं अभिप्रेतं—इति चेत्, न, सर्वस्य अस्मदनुव्यवसा(य)प्रत्यक्षयोग्यत्वाङ्गीकारात् । अस्मदीय(-अनु)व्यवसायायोग्यस्यापि ग्रहणं विवक्षितं—इति चेत्, तथापि साक्षिप्रत्यक्षेऽतिव्याप्तिः । न च तत्र विसंवदितव्यं—इत्युक्तम् । अनीश्वरप्रत्यक्षशब्देन च अयोगिप्रत्यक्षग्रहे—व्याघातः, योगिप्रत्यक्षग्रहे च—आत्माश्रयता ॥

किञ्च, योगिप्रत्यक्षे प्रमाणं—विमतं कस्यचित् प्रत्यक्षं, प्रमेयत्वात्, कुम्भवत्—इति चेत्, न; विमतं न धर्मादिविषयं, इन्द्रियत्वात्, अस्मदिन्द्रियवत्—इति अनुमानात् । त्वत्पक्षे हेतोः आश्रयासिद्धेः(द्धिः?)—इति चेत्, न; परमतेन आश्रयस्य सिद्धत्वात्, धर्मादेश्च हिरण्यगर्भादिप्रत्यक्षतया सिद्धसाध्यत्वात्, साक्षिवेद्यतया च तद्भावात् ॥ व्यासादिबुद्धिः न वेदार्थविषया, बुद्धित्वात्, अस्मदादिबुद्धिवत्—इति चेत्, न; तव ईश्वरबुद्धौ व्यभिचारात्, अनीश्वरबुद्धित्वात्–इति विशेषणेऽपि निरीश्वरवादे–विशेषणवैयर्थ्यात्, सेश्वरवादेऽपि—तस्यैव हिरण्यगर्भाद्यात्मना अवस्थानात् हेतोः असिद्धत्वात् ।

तस्मान्न किञ्चित् प्रत्यक्षं परीक्षां क्षमते (मतेः) ।
तथापि व्यवहारोऽयमक्षतोऽज्ञानशिक्षितः ॥ ४२ ॥

अनुमानं अपि किं उच्यते ? (१) सम्यगविनाभावेन परोक्षानुभवसाधनं—इति चेत्, न ।

तद्विशेषणताऽयोगे तद्विशेषणता कुतः ।
द्विधा व्याप्तेरयुक्तत्वादपास्तत्वाच्च नेदृशम् ॥

न तावत् एतादृ(शं) अनुमानलक्षणं उपपद्यते, सम्यक्त्वस्य ज्ञानैकधर्मत्वे ज्ञानत्ववदविनाभावकर्मत्वायोगात् । तद्विशेषितज्ञानविषयत्वात् तस्य तद्विशेषिता—इति चेत्, न; (अ)र्थविषयत्वेन ज्ञानस्य तद्विशेषितत्वं, ज्ञानगतविशेषस्य अर्थद्वारकत्वात् तथाविधज्ञानविषयत्वाच्च अर्थस्य तद्विशेषितत्वं—इति अन्योन्याश्रयत्वात् । स्वतश्चैवमर्थे सम्यक्त्वाभावात् असम्यक्त्वा-

परपर्यायं आभासत्वं अविनाभावे स्वारसिकं अभ्युपगतं भवेत् । तस्य अर्थैकधर्मत्वेऽपि न ज्ञानविशेषणत्वम् । तथा च, ज्ञानमात्रस्य असम्यक्त्वे—भ्रमविभागो न सिध्येत् । सम्यक्त्वस्य उभयधर्मत्वे—ज्ञानत्वावान्तरजातित्वाङ्गीकारो व्याहन्येत; अर्थस्यैव सम्यक्त्वेन ज्ञानस्यापि तथात्वोपपत्तौ च उभयत्र तद्धर्मकल्पनायां गौरवं आपतेत् । न च—एवं अर्थस्येव अस्तु ज्ञानस्य तद्द्वारकं सम्यक्त्वं—इति युक्तम् । न हि प्रामाणिकत्वं ऋते तस्य तथात्वं अधिगतम् । तच्च सम्यग्ज्ञानविषयत्वात् अव्यति(रि)क्तं इष्टम् । तथा च कथं उक्तं इतरेतराश्रयत्वं न अवतरेत् ॥

अविनाभावश्च अन्वयो व्यतिरेको वा । द्विधाऽपि व्यतिरेकिणि अन्वयिनि च अव्याप्तिः आपतति । अत एव न उभयोः अविनाभावत्वम् । स च जात्योः व्यक्त्योः उपाध्योः तद्वतोः वा न निरूप्यते । न तावत् जात्योः अविनाभावोऽवगन्तुं शक्यते, धूमत्वाग्नित्वयोः भिन्नाधिकरणत्वात् । नापि धूमाग्निव्यक्त्योः असौ सिध्यति, अनुगमाभावात् । न च धूमवत्त्ववह्निमत्त्वयोः तत्सिद्धिः, विशिष्टभेदे तन्निविष्टयोः तयोरपि व्यधिकरणत्वाविशेषात् । न च जात्याक्रान्तयोः उपाधिमतोः वा विशेषयोः असौ सेद्धुं अर्हति, प्रागुक्तानुगमस्य अत्रापि व्यक्तत्वात् । जात्युपाध्योः अन्यतरद्वारेण अनुगमे—या काचित् धूमव्यक्तिः यया कयाचित् अग्निव्यक्त्या व्याप्ता—इत्येतावति व्याप्तिवेदनपर्यवसानात्—तदधिगततदखिलव्यक्तिं आकलयन्, ज्ञेयत्वस्य कस्यचित् प्रत्यक्षत्वस्य च व्याप्तिं अनुसन्दधानः, सर्वज्ञः स्यात् । न च अनुमितिकाले तदनुभवोऽस्ति, तस्य अतिवृत्तस्य स्मृतिद्विपरिवर्तित्वेऽपि न अनुमित्यङ्गत्वं, अप्रामाणिकत्वात्; स्यतस्यापि तदङ्गतायां आभासविवेकतानर्थक्यात्; प्रतिपन्नस्य अत्र(व?)भासस्य तथात्वेऽपि तथाविधप्रतीतेः त्वन्मते प्रमित्यव्यतिरेकात् । न च—सा स्मृतिः अपि—इति युक्तं, तस्याः मनःसंयोगजन्मकालनियमात् । अनुभवजनितसंस्कारसमुद्बोधसापेक्षत्वात् तन्नियमः स्यात्—इति चेत्, न, पूर्वानुभवनाशकाले संस्कारवत् अनुभूतस्मृतेरेव समुदयसम्भवे संस्कारकल्पनावैयर्थ्यात् । न च सम्भाविता स्मृतिः अनुमितिहेतुः, अनभ्युपगमात् ॥

तृतीया च न—इत्थम्भावे—सम्भवति, साधनस्य अविनाभावाभावात् । नापि—सहार्थे सा—इति युक्तं, साधनस्य तद्विधुरस्य तेन साहित्येऽपि गमकत्वायोगात् । न खलु घटजननासमर्थानां तन्तूनां तज्जन(न)समर्थमृदादिसाहित्ये-

ऽपि घटजनकत्वं अभ्युपगम्यते। न च तद्रहितस्य तेन साहित्यं, व्याघातात्। अविनाभाववतः तेन साहित्ये—तेनापि स्वस्य तथात्वं स्यात्। न च तत् युक्तं, भेदापेक्षत्वात्। न च–हेत्वर्थे तृतीया—इति युज्यते, कुर्वतो हेतुत्वस्य दुर्वचत्वात्; कुर्वत्त्वस्य कादाचित्कत्वे कुर्वत्त्वान्तरापेक्षायां—अन(व)स्थानात्, नित्यत्वे—कार्यसातत्यसंयोगात्। अकुर्वतो हेतुत्वेऽपि तुल्यम्॥ एतेन–करणार्थे तृतीया—इति निरस्तं, कारकत्वासम्भवे करणत्वस्यापि तद्विशेषस्य वक्तुं अशक्यत्वात्।

न च परोक्षविशेषणं अर्थवत् आलक्ष्यते। तद्धि प्रतिक्षेपार्थं इष्टम्। तच्च अविनाभावविशेषणेनैव प्रतिक्षेप्तुं शक्यं इति कुतो विशेषणार्थवत्ता।

वह्निधूमयोः सहचरितयोः भूयोभूयोदर्शने दहनाविनाभूतो धूमः इति प्रत्यक्षं अविनाभूतधूमविषयं अविनाभावसाधनजनितं, विषयस्यापि प्रत्यक्षे कारणत्वात् न च तत् अनुमानं इति। व्यभिचारे, तन्निरासार्थं विशेषणं अर्थवत्—इति चेत्, न; साधनपदेन करणस्वीकरणात्, अन्यथा कालादौ अतिव्याप्तिप्रसङ्गात्। न च–परोक्षत्वजातेः विषयाश्रितत्वमतनिरासाय अनुमानफलकथनाय वा अनुभवविशेषणत्वेन परोक्षत्वं उक्तं—इति युक्तं, लक्षणे तयोः अनुपयोगात्।

एतेन (२) अविनाभावजनितसम्यक्परोक्षानुभवः–अनुमितिः तत्साधनं अनुमानं–इति वा, (३) स्मर्यमाणेन अविनाभावेन सह अनुभवस्य सम्यक्साधनं अनुमानं इति वा, निरस्तं; परोक्षत्वविशेषणस्य अनर्थकत्वात्, अर्थज्ञाननिष्ठत्वेन सम्यक्त्वस्यापि वक्तुं अयुक्तत्वात्॥ ४३॥

कश्च अविनाभावः? (१) व्याप्तिः–इति चेत्, न, मैत्रतनयत्वश्यामत्वयोरपि तत्प्रसङ्गात्। स्वाभाविकी—इति विशेषणात् न—इति चेत्, न; स्वभावात् जन्यत्वस्य द्रव्यसम्बन्धे गुणादीनां असिद्धत्वात्, तस्य समवायत्वेन नित्यत्वात्, तादात्म्यस्य च तदनभ्युपगमपक्षे सर्वत्र अभावात्॥

अत्यापत्तेर्न ते व्याप्तिर्विशेषणवचो न च।
स्वाभाविकत्वं निर्वक्तुं यतो नैवेह शक्यते॥

स्वभावतो ज्ञातत्वं व्याप्तेः तथात्वं–इति चेत्, न, धूमाग्निसम्बन्धस्य ज्ञापकान्तराङ्गीकारात्। निरुपाधिकत्वं स्वाभाविकत्वं–इति चेत्, न, उपाधेः दुर्निरूप्यत्वेन असम्भवित्वात्।

तदसिद्धौ कुतः सिद्धिस्तन्निषेधस्य कथ्यताम् ।
परस्परा(श्रया)देश्च नोपाधिरुपपद्यते ॥

उपाधिर्हि ((१)साधनाव्यापकत्वे सति साध्यव्यापकः ।) साधनाव्यापकत्वं, च साध्येन अनौपाधिकः सम्बन्धः, स च औपाधिकज्ञानद्वितीयः, अननुगमात् विशेषलक्षणस्य विवक्ष्यत्वात् । अननुगतिः अदूषणं—इति चेत्, न, सामान्य-लक्षणाभावे तल्लक्षणविवक्षायोगात् । (२) पक्षनिष्ठात्यन्ताभावप्रतियोगित्वं त-ल्लक्षणं—इति चेत्, न, विपक्षत्वस्यापि तत्त्वप्रसङ्गात् । न च तस्य व्याप्तिप्रयो-जकत्वं, विपक्षे साध्यसाधनयोः अभावात् । न च सदनुमाने तदभावो निर्णेतुं शक्यते । यावन्तः साध्यव्यापकाः ते सर्वे साधनव्यापकाः, यावन्तो वा साध-नाव्यापकाः ते सर्वे साध्याव्यापकाः—इति निरूपण(णी?)या तत्सिद्धिः—इति चेत्, न; तथा सति क्वापि तदभावप्रसङ्गात्, साध्यव्यापकत्वे साधनव्यापकत्वा-भावात्, तदव्यापकत्वे च साध्याव्यापकत्वात् ॥

यत्तु—साध्यव्यापकस्य साध्यवन्निष्ठात्यन्ताभावाप्रतियोगित्वेन निरुक्तेः साधनाव्याप(कस्य साधनवन्निष्ठात्यन्ताभावप्रतियोगित्वेन निरुक्तेः साध्य)व्याप-कस्य उपाके(धेः?) सिद्धि(ः) व्याप्त्यधीना इति अभ्युपगमात्—इति, तत् न; यदि अव्यभिचारसिद्धिनिबन्धना उपाधिसिद्धिः, तर्हि साधनस्य साध्येन अव्यभिचारा(त् उपाधिसिद्धौ) व्याप्तिसिद्धिः इति उपाधिनिरूपणवैयर्थ्यात् । उपाधे(रव्यभिचार इति) चेत्, तर्हि—

"व्यभिचारो न य(त्) कुर्वन्नुपाधिकनिर्दोषताम्"—

इति न्यायेन अव्यभिचारार्थं उपाधिः निरूपणीयः । स च साध्येन अ-व्यभिचारवान् इति, तादर्थ्येन अव्यभिचारित्वं—स्वाभाविकत्वं इति प्रत्युक्तम् । किञ्च उक्तलक्षणे सति उपाधौ केवलान्वयिनि पक्षेतरत्वस्य उपाधित्वं अप्रत्यू-हम् । तत्र पक्षे वस्तुतः साध्यसत्त्वे सोपाधित्वं, अन्यथा (नि)रुपाधिः एव इति चेत्, न; कस्यचित् प्रत्यक्षं अदृष्टादि, मेयत्वात्—इत्यत्र पक्षे वस्तुतः साध्य(स)-त्त्वेऽपि, सन्दिग्धत्वात् उपाधेः आवश्यकत्वात् । अदृष्टादेः ईश्वरप्रत्यक्षत्वेन तत्र साध्यस्य असन्दिग्धत्वात् न—इति चेत्, तथा सति अनुमानवैयर्थ्यम् । "अशरीरं वा(व")इ)ति श्रुतिसिद्धेऽपि मोक्षे दृष्टं अनुमानं—इति चेत्, न; तत्रापि वैय-र्थ्यस्य तुल्यत्वात्, प्रकृते च अन्वयिनि पक्षे साध्यनिर्णयैकप्रमाणस्य उपजी-व्यत्वा । वैयर्थ्यं तदनुपजीवने; पक्षेतरत्वोपाधेर्दुर्वारत्वात्, तदपेक्षणे तावतैवत्

नैराकाङ्क्ष्यात् अनुमा(ना)नर्थक्यात्, मोक्षानुमाने च श्रुतेः अनुपजीव्यत्वात्, तत्सिद्धे बुभुत्साबृत्तेः अविरोधात् ॥

एतेन—(२) निरुपाधिकः सम्बन्धो वा, (३) अव्यभिचरितः सम्बन्धो वा, व्याप्तिः—इति निरस्तम् ॥

अनिरुक्तेरतिव्यक्तव्याप्तेरुक्तेन हेतुना ।
तद्वैविध्यं निराबाधं न संसिध्येन्निराश्रयम् ॥

यत्तु—सामान्येन साधनसामान्यस्य व्याप्तिः अन्वयः इति—तत् असत्; व्याप्तेः अधस्तादेव प्रत्युक्तत्वात् तदवान्तरभेदस्य अन्वयस्य वक्तुं अयुक्तत्वात्, प्रत्यक्षधूमव्यक्ते(:) तथाविधवह्निव्यक्त्या व्याप्तेः दुर्वारत्वात् । तत्रापि सा(मा)न्योपाधौ एव व्याप्तौ धूमव्यक्तिं दृष्ट्वा पर्वते कुतो वह्निव्यक्तेः अनुमानम् । अवान्तरे सामान्यदृष्ट्या, सामान्यानुमितौ च वह्निमात्रस्य तत्र अनुपपत्त्या, बाधः समापतेत् । न खलु निखिलमपि वन्हिवस्तु पर्वतनिष्ठं आतिष्ठते, तद्व्यक्तेरेव तत्र व्यक्तत्वात् । नापि साधनसामान्याभावेन साध्यसामान्याभावस्य व्याप्तिव्यतिरेकः, यथोक्तन्यायादेव तत्प्रतिव(च)नस्य सुकरत्वात् इति ॥ ४४ ॥

किञ्च, (१) साधनं लिङ्गं—इति चेत्, न, प्रकृते लक्षणे साधनं—लिङ्गं—इतिपदयोः एकार्थतया पर्यायत्वात् । ( २ ) अनुमितिकरणं—ईति चेत्, तर्हि तत्र(तैव) चरितार्थतया सम्यगविनाभावेन—इत्यादिविशेषणवैयर्थ्यम् । अनुमितिश्च—सम्यगविनाभावजनिता परोक्षप्रमितिः—अनन्तरमेव निराकृता । करणं अपि निरस्तम् ॥

साधनं लिङ्गमित्यादि यदा वक्तुं न शक्यते ।
तदा साधनसंयुक्तं लक्षणं लक्ष्यते कथम् ॥
दृष्टं सामान्यतोदृष्टमिति श्लिष्टा कुतो भिदा ।
परस्परमसाङ्कर्यवाचोयुक्तेरयुक्ततः ॥

न च—प्रत्यक्षयोग्यार्थानुमापकं दृष्टं—इति युक्तं; सामान्यतोदृष्टस्यापि तथात्वात्, तदर्थस्य ईश्वरप्रत्यक्षत्वात् तद्योग्यानुमापकत्वस्य तस्मि(न् अ)भावात्, अस्मदादिविशेषणेऽपि—तदीयानुव्यवसायविषयतया तद्योग्यार्थानुमापकत्वस्य सामा(न्य)तोदृष्टस्पष्ट(°दृष्टेऽस्प?)ष्टत्वात्, तदितरत्वविशेषणस्य अनुव्यवसायानङ्गीकारपक्षे—व्यर्थत्वात्, तदित(र)तज्जातीयान्यविषयत्वसम्भवेन उक्तदोषतादवस्थ्यात्, अनुव्यवसायत्ववदितरत्वविशेषणेऽपि—विशेषाभावात्,

अ(नु)व्यवसायत्वानधिकरणत्वविवक्षायां अपि—तदन्योन्याभावं आदाय उक्तदोषस्य तुल्यत्वात्, तत्संसर्गाभावस्वीकारेऽपि—त(द)न्योन्याभावं गृहीत्वा दर्शि(त)प्रसङ्गस्य दुष्परिहरत्वात् ॥ नापि—स्वाभावविप्रकृष्टानुमापकं सामान्यतोदृष्टं, स्वाभावविप्रकर्षस्य प्रत्यक्षायोग्यपर्यायस्य पूर्ववत् असम्भवित्वात्, तत्काले तदयोग्यत्वस्य दृष्टेऽपि अविशिष्टत्वात्, कालान्तरे तदयोग्यत्वस्य दुर्ज्ञानत्वेन निरस्तत्वात् ॥

स्वार्थं परार्थमित्येवं विभागो न प्रशस्यते ।
परोपदेशवाक्यस्य विरोधागोचरत्वतः ॥

न हि—परोपदेशो नाम पञ्चावयववाक्यं—इति युज्यते, प्रतिज्ञादीनां तदवयवानां दुर्वचत्वात् ।

न तावत्—प्रति(पि)पादयिषया पक्षवचनं प्रतिज्ञा; वादिनः तदिच्छायां प्रतिवादिप्रतिज्ञायां अव्याप्तेः, प्रतिवादिनः तस्यां वादिप्रतिज्ञायां तथाभावात्, वादिप्रतिवादिनोः अन्यतरस्य प्रतिपिपादयिषायां अपि दर्शितदोषाविशेषात्, मध्यस्थस्य तथात्वेऽपि तथात्वात्, हेत्वादिप्रतिपादनेच्छया च उक्तपक्षानुवादे अतिव्याप्तेः ॥ साध्यस्यैव प्रतिपादनेच्छया तद्वचनं तथा—इति चेत्, न; हेत्वादेरपि प्रतिपादनेच्छया तद्वचनदर्शनात्, एवकारं त्यक्त्वा तद्वचनं तथा—इत्युक्तेऽपि-साध्यस्य वक्तव्यत्वात्, सन्दिग्धस्य तथात्वे—वादिनः सन्देहे तत्प्रतिपादनेच्छया पक्षवचनसम्भवात् । न हि स्वस्य सन्दिग्धं परस्मै प्रतिपादयितुं प्रामाणिकप्रयत्नो युक्तः; प्रतिवादिनश्च अन्यथैव निश्चयात्, अप्रतिपन्नेऽपि सन्देहायोगात् । एवं उभयोरपि सन्देहो नि(र)सनीयः ॥ न च—सन्दिग्धस्यैव साध्यत्वं, अन्यथाज्ञातस्य अज्ञातत्वभावाभ्युपगमात् । नापि प्रतिपिपादयिषितया तथात्वं, दुदूषयिषितस्यापि प्रथमे तथात्वाङ्गीकारात् । न च प्रमित्सितस्य साध्यत्वं; उक्तदोषाविशेषात्, अन्यत्रापि च तद्भावात् ।

एते(न) साध्यधर्मविशिष्टो धर्मी पक्षः—इति प्रतिक्षिप्तं, सपक्षेऽपि साध्यधर्मवैशिष्ट्यस्य स्पष्टत्वात् । तत्समानधर्मवैशिष्ट्यं एव तत्र-इति चेत्, न, साध्यसमानस्यापि साध्यशब्दवाच्यत्वात्, घटसमानजातीयस्य घटशब्दत्वदर्शनात् ॥

इच्छाधिकरणाज्ञानात्, पक्षस्यापि तथात्वतः ।
साध्यस्य दुर्विवेकत्वात्, प्रतिज्ञा दुर्घटा स्थिता ॥

यत्तु–साधनत्वव्यापकं लिङ्गवचनं हेतुः–इति तत् अयुक्तम् ।

साधनत्वं हि साध्यस्य प्रमितावभ्युपेयते ।
करणत्वं तथा चात्माश्रयत्वादि प्रसज्यते ॥

साध्यप्रमितिकरणत्वं हि साधनत्वं, तच्च हेतोरेव इति आत्माश्रयत्वं; साधनत्वलिङ्गत्वयोश्च अनुमितौ एकार्थत्वेन पर्यायत्वं, तेन च लिङ्गव्यवस्थापनात् इतरेतराश्रयत्वम् ॥

न निरुक्तिर्यदा हेतोस्त्रैविध्यं कुतस्तदा ।
न हि धर्मिण्यसंसिद्धे तद्धर्मः सिद्धिमश्नुते ॥

न च–पञ्चरूपः अन्वयव्यतीरेकी–इति उपपद्यते, पक्षधर्मत्वादीनां निरूपयितुं अशक्यत्वात् ॥

न तावत्—पक्षे हेतोः व्याप्यवृत्तित्वं पक्षधर्मत्वं; पक्षस्य हेतोश्च प्रतिनिक्षिप्त(त्वा)त्, पक्षे च हेतुविशिष्टे हेतोः व्याप्यवृत्तात्(वृत्तित्त्वात्?), तद्रहिते च (त)द्वृत्तौ साध्यस्यापि तत्र असम्भवात् अपक्षत्वप्रसङ्गात्; व्यापकधर्मिणि सत्त्वे तद्व्याप्यस्यापि हेतोः तत्र आवश्यकत्वात् उक्तदोषानिस्तारात् ॥ एतेन–(२) पक्षे सर्वस्मिन् एकदेशे वा हेतोः वृत्तिः सपक्षे सत्त्वं–इति निरस्तम् ॥

न हि—सपक्षः साध्यसमान(धर्मा) धर्मी—इति युक्तं, पक्षान्तरस्यापि तल्लक्षणत्वात् एकस्याः साध्यव्यक्तेः उभयत्र असम्भवात् । धर्मी–इति च अनर्थकं, बहुव्रीहिणा धर्मित्वस्य सिद्धत्वात् । पक्ष(विशेष)णेऽपि तुल्यं विशेषणवैयर्थ्यम् । न च लक्षणे विकल्पः, व्याप्त्यभावप्रसङ्गात् । न हि–सर्वस्मिन् एकदेशे वा सपक्षे हेतोः वृत्तिः सपक्षे सत्त्वं—इत्युक्ते व्याप्तिः युक्ता, विकल्पे अपरस्य दुर्वारत्वात् ।

साध्यविपरीतधर्मा धर्मी विपक्षः–इति न; धर्मिविशेषणस्य पूर्ववत् असमर्थत्वात्, यस्मात् कस्माच्चन साध्यात् विपरीतसाध्यान्तरधर्मवति पक्षे च अतिव्याप्ते(:), साध्यात्यन्ताभावत्वस्य च असिद्धत्वात्, तस्यापि कस्याञ्चित् अवस्थायां साध्यविशिष्टत्वेन पक्षत्वस्य इष्टत्वात्, तद्व्यावृत्तत्व(स्यै)व तत्र साध्यत्वात् तदत्यन्ताभाववत्त्वानुपपत्तेः ॥ न च विपक्षे सर्वस्मिन् हेतोः अवृत्ति(:), विपक्षविशेषणेन क्षारीकृतत्वात्, हेतुविशेषणस्य च तन्निरुक्ता(क्त्य?)भावे वक्तुं अशक्यत्वात् ॥

रूपत्रयं निराकारि, तुरीयं तु निरस्यते ।
विकल्पयोग्यता हेतोर्विशेषणनिराकृतेः ॥

प्रमाणाविरोधिनि प्रतिज्ञातार्थे हेतोः वृत्तिः अबाधितविषयत्वं—इत्यपि न; किञ्चित्प्रमाणाविरोधित्वस्य बाधितविषयेऽपि भावात्, सर्वप्रमाणाविरोधित्वस्यापि किञ्चित्प्रमाणाविरोधिन्येव विद्यमानत्वात्, प्रतिज्ञाप्रतिवचनाच्च प्रतिज्ञातार्थविशेषणायोगात् हेतुनिराकरणत्वे हेतोः इति विशेषणासम्भवात् ॥

साध्यतद्विपरीतयोः साधनस्य अत्रिरूपत्वं असत्प्रतिपक्षत्वमिय(°मित्यपि न)।

(उभयोः प्राक्) परास्तत्वात् विरुद्धाव्यभिचारिणि।
सिद्धत्वा(त्), हेतुभेदे तु तदाभासे ग(त)त्वतः ॥

साध्यसाधनयोः उभयोरपि प्रागेव प्रत्युक्तत्वात् न तद्विशिष्टं लक्षणं एष्टुं शक्यम्। न च एकस्यैव साधनस्य साध्यतद्विपरीतयोः अत्रिरूपत्वं, विरुद्धे व्यभिचारिणि अपि सिद्धत्वा(त्), साधनभेदेन त्रिरूपत्वस्य सत्प्रतिपक्षेऽपि सत्त्वात् तत्र साधनस्य एकत्वात् ॥

नियमो न च रूपेषु तेषां त्रिष्वपि सम्भवात्।
विशेषवचनं तेन नि(र)र्थकमिति स्थितम् ॥

न हि—पञ्चरूपः अन्वयव्यतिरेकी इति पञ्चरूपत्वविशेषणवचनं अन्वयव्यतिरेकिणो—युक्तं, अन्वयिनो व्यतिरेकिणश्च तथात्वात्। केवलान्वयिनो हि (१) पक्षधर्मत्वं (२) सपक्षे सत्त्वं (३) अविद्यमानस(°नवि)पक्षतया (विपक्षा)त् व्यावृत्तिः (४) अबाधितविषयत्वं (५) असत्प्रतिपक्षत्वं इति पञ्च रूपाणि इष्यन्ते॥

केवलव्यतिरेकिणोऽपि पक्षव्यापकत्वं अविद्यमानसपक्षत्वं विपक्षात् व्यावृत्तिः—इत्यादीनि सन्त्येव पञ्च रूपाणि ॥ अवान्तरभेदेऽपि न विद्यते पञ्चरूपत्वं इति एकत्र रूपनियमवचनं अनर्थकम् ॥

उपलक्ष(ण)पक्षे च न क्वचित् पञ्चरूपता।
उक्तन्यायेन संसिध्येत् न च हेतू प्रसिध्यतः ॥

पक्षव्यापकः अविद्यमानविपक्षः सपक्षवृत्तिः केवलान्वयी, पक्षव्यापकः अविद्यमानसपक्षः विपक्षात् व्यावृत्तः केवलव्यतिरेकी—इति हेतुद्वयं लक्ष्यते। तच्च पक्षादीनां अनिरुक्त्या प्रतिवक्तव्यम् ॥ ४५ ॥

हेतोर्निर्वचनाभावे तदाभासेषु तत् कथम्।
तल्लक्षणवियोगेन तथा(तदा?)भासा हि ते मताः ॥

हेतोः अशक्यनिर्वचनत्वे हेत्वाभासनिर्वचनं दूरनिवारितम्। हेतुलक्षणर-

हिताः हेतुवदवभासमानाः हि हेत्वाभासाः विवक्ष्यन्ते । न च–हेतोः असिद्धौ तल्लक्षणं वा तद्राहित्यं वा तद्वदाभासनं वा–सम्भवति । उदाहरणादौ च अतिव्याप्तिः, तस्य तल्लक्षणरहितत्वात्, गमकतया तद्वदाभासनाच्च ।

तद्भेदा नैव निर्वक्तुं शक्यन्ते त्रिदशैरपि ।
अ(ति)व्याप्तेस्तथाऽव्याप्तेरसिद्धो न हि लक्ष्यते ॥

न हि हेत्वाभासानां असिद्धविरुद्धादीनां निर्वचनं उपपद्यते । न तावत्—( १ ) अनिश्चितपक्षवृत्तिः असिद्धः इति–असिद्धो निर्वक्तुं शक्यते, येन केनचित् अनिश्चितपक्षवृत्तित्वस्य सद्धेतौ अपि सिद्धत्वेन अतिव्यापकत्वात्, सर्वैरपि तथात्वस्य असर्वज्ञे(°ज्ञत्वे)न ज्ञातुं अशक्यत्वात् असम्भवित्वात्, पक्षनिर्वचनासम्भवस्य च उक्तत्वात् । एतेन (२) व्याप्यत्वपक्षधर्मत्वाभ्यां अप्रमितो हेतुः असिद्धः–इति निरस्तं, व्याप्तिपक्षयोरधस्तादेव निरस्तत्वात्, अप्रमितत्वस्यापि केनचिद्वा सर्वैर्वा इति निर्वक्तुं अयुक्तत्वात्, द्विविधेषु च (वि)विधेषु च विरुद्धभेदेषु चतुर्षु विरुद्धासिद्धलक्षणाक्रान्तेषु अतिव्याप्तेः व(व्य?)क्तत्वात् । न हि विवक्षाभेदो दर्शितां अतिव्याप्तिं निवारयितुं पारयति ॥

नापि–(१)पक्षविपक्षयोः एव वर्तमानो विरुद्धः–इति युक्तं—

तत्र कात्स्न्र्येन तद्वृत्तावव्याप्तेरनिवारणात् ।
एकदेशेन तद्वृत्तावपि सा न निवर्पितो( निवर्तते ? ) ॥
तत्र तद्वृत्तिमात्रस्य सत्ता चेदभिचित्सता (°भिधित्सिता । ? )
तथापि नैव तत्सिद्धिस्तयोरेवाप्रसिद्धितः ॥

(२)साध्यविपर्ययव्याप्तो विरुद्धः–इत्यपि न ।

साध्यासिद्धेरसिद्धेश्च व्याप्तेरुक्तेन हेतुना ।
विरोधस्याप्रसिद्धेश्च न प्रसिद्धा विरुद्धता ॥

पक्ष(सपक्ष)विपक्षवृत्तिः अनैकान्तिकः–इत्यपि न ।

विरुद्धनीतेरत्रापि निवेशात्तदनुत्थिते(:) ।
व्यभिचारविचारस्य विरुद्धेऽपि प्रसङ्गतः ॥
आद्ये साधारणे सत्त्वं न च साधारणं तयोः ।
साध्यसन्देहहेतुत्वं साध्यासिद्धेर्न सिध्यति ॥

साध्यासाधक(:) पक्षे एव वर्तमानः अनध्यवसितः–इति च अयुक्तम् ।

तदसाधकतामात्रे दूषणत्वप्रयोजके ।
विशेषणमसत्सर्वं तावतैव हि दूषणम् ॥
अतिव्याप्तिस्तु नो सिद्धा भेदसिद्धेरसिद्धितः ।
अथापि न हि ते सिद्धा मिथो(थः?) सङ्करभागिनः ॥
न चास्तु तावदेवेदं हेत्वाभासस्य लक्षणम् ।
साध्यासिद्धेरतिव्याप्तेराभासान्तरसङ्ग्रहात् ॥

प्रमाणबाधिते प्रतिज्ञातार्थे वर्तमानो हेतुः कालात्ययापदिष्टः—इति अश्लिष्टम् । प्रमाणबाधितविषयो हेतुः एवं इति लक्षणपर्यवसाने-तद्विशेषस्य बाधकत्वविवक्षायां अव्याप्तिप्रसङ्गात्, तन्मात्रस्य तथात्वे-क्वचिदपि सर्वप्रमाणस्य बाधकत्वेन अप्रवृत्तेः असम्भवित्वात्, यस्य कस्यचित् तथाभावाभिधाने-तदनिर्णये लक्षणवाक्यापार्थक्यात्, तन्निर्णये तु-पूर्वोक्ताव्याप्तितादवस्थ्यात् ॥

मानव्यक्तेस्तथाभावे कथं नाव्याप्तिरापतेत् ।
तन्मात्रस्य तु तद्भावे सर्वत्राव्याप्तिरेव ते ॥
कस्यचिच्चेत्तथाभावोऽनिर्णयेऽपार्थकं वचः ।
निर्णयेऽव्याप्तिरुक्तैव । वो (बाधो?)पि न निरूप्यते ॥
अपातिकस्य चेदिष्टः सद्धेतावपि सज्यते ।
सर्वथा चेन्न तज्ज्ञानमसर्वज्ञस्य लभ्यते ॥

नापि स्वपरपक्षसिद्धौ त्रिरूपो हेतुः प्रकरणसमः—इति युक्तं; स्वपरशब्दाभ्यां वादिप्रतिवादिविशेषोक्तौ अव्याप्तेः दुर्वारत्वात्, तन्मात्रोक्तौ असम्भवित्वात्, द्वयोश्च हेत्वोः निर्दोषत्वे वस्तुनो वैकल्पिकत्वप्रसङ्गात् । एतेन एकस्य हेतोः उ(भ)यत्र निर्दोषत्वं निरस्तं, अन्यतरस्य वस्तुनः सदोषत्वे-प्रकरणयोः समत्ववाचोयुक्तेः रिक्तत्वात्, प्रातीतिके तथात्वेऽपि-हेतोरपि तत्प्रतीतिसम्भवेन अतिव्याप्तेः, निरूप्यमाणे तदभावस्य प्रकृतेऽपि तुल्यत्वात् ।

एतेन-एकत्र तुल्यलक्षणविरु(द्धहेतु)द्वयोपनिपातो विरुद्धाव्यभिचारी-इति प्रत्युक्तं; हेतुद्वयस्य सर्वथा तुल्यलक्षणे वस्तुनि विकल्पप्रसङ्गात्, यथाकथञ्चित् तथात्वस्य अतिप्रसङ्गित्वात्, आपाततश्च विरुद्धत्वस्य अतिप्रसञ्जकत्वात्, सर्वथा तथात्वे-तुल्यलक्षणत्वव्याघातात्, मिथोविरुद्धसाध्यविषयत्वस्यैव प्रतिवक्तुं शक्यत्वात् ॥

सर्वथा न हि तुल्यत्वं विकल्पानवकल्पनात् ।
यथाकथञ्चित्तद्भावे नात्यापत्तिः कथं भवेत् ॥

आपाततो विरुद्धत्वं तादृशे च न युज्यते।
सर्वथा तु विरुद्धत्वं तुल्यलक्षणबाधितम्॥
मिथो विरुद्धसाध्यत्वं न चैवमु(प)पद्यते।
साध्ये विरुद्धे तुल्यत्वं (न) हि सिद्धिमुपाश्नुते॥ ४६॥

सम्यग्दृष्टान्ताभिधानं उदाहरणं–इत्यपि (न)।

अन्वयव्यतिरेकाभ्यामव्याप्तेरुद्गतत्वतः।
स्वाश्रयत्वप्रसक्तेश्च व्याघातः स्यादतोऽन्यथा॥

अन्वयमुखे दृष्टान्ताभिधानस्य वैधर्म्योदाहरणे व्यतिरेकमुखेन तद्वचनस्य च साधर्म्योदाहरणेऽभावात् अव्याप्तेः व्यक्तत्वात् न उक्तं तल्लक्षणं युक्तम्। उभयथा तदभिधानस्य च अन्वयिनि व्यतिरेकिणि च अभावात् अव्याप्तिः। सम्यक्त्वस्य च प्रत्युक्तत्वात् कुतो यथोक्तं लक्षणं सिध्येत्। दृष्टान्तशब्देन च उदाहरणस्यैव निर्देशात् आत्माश्रयत्वं, अन्यथा तदभिधानस्य उदाहरणत्वव्याहतिः॥

(१) यत्र लौकिकपरीक्ष(क)बुद्धिसाम्यं स दृष्टान्तः–इति न; सर्वेषां तेषां एकत्र बुद्धिसाम्यस्य निर्धारयितुं अशक्यत्वात्, कतिपयतदीयबुद्धिसाम्यस्य अदृष्टान्तेऽपि स्पष्टत्वात्।

उभयेषां मनीषायाः साम्यमेकत्र नेष्यते।
सर्वेषामन्यथा साम्यमदृष्टान्तेऽपि लभ्यते॥

(२) व्याप्तिभूमिः दृष्टान्तः–इत्यपि (न)।

व्याप्तेरभावे तद्भूमेर्दुर्भणत्वान्न हीदृशम्।
हेत्वाभाससमानत्वात् तदाभासाश्च नो मताः॥

यदा व्याप्तिरेव वक्तुं अशक्या इति उक्तं, तदा तद्ग्रहणस्थलस्य दर्शयितुं अशक्यत्वात् न इदं लक्षणं उदाहरणस्य युक्तम्॥

यथा हेत्वाभासानां निरूपयितुं अशक्यत्वं आदर्शितं, तथा उदाहरणाभासानामपि निरूपणं अशक्यं आलक्ष्यते। उदाहरणवदवभासमानाः तल्लक्षणरहिताः हि ते विवक्ष्यन्ते, गमकत्वात् (°कतया?) तद्वदवभासमानत्ववैजात्यात्। तल्लक्षणराहित्यं च हेत्वादिष्वपि समस्ति–इति कुतो न अतिव्याप्तिः उदाहरणाभासलक्षणस्य स्यात्॥

मूलाभावे न शाखानां प्ररोहो जगतीक्ष्यते।
आभासलक्षणाभावे तद्भेदवचनं न च॥

उदाहरणाभासलक्षणस्यैव प्रागुक्तरीत्या सम्भावनाभावे कुतः तदवान्तरभेदचिन्ता सिध्यति । न हि परिदृश्यमानेषु मूलविकलेषु शाखोपशाखाभेदप्रवृत्तिः उपलभ्यते । तस्मात् न उदाहरणं उदाहरणाभासो वा सम्भवति ।

दृष्टान्ते प्रसिद्धाविनाभावस्य साधनस्य दृष्टान्तोपमानेन पक्षे व्याप्तिंख्यापनं(कं?) वचनं उपनयः–इत्यपि न—

द्वयोर्द्वयोरपास्तत्वादात्मवृत्तित्वसक्तितः ।
नैरपेक्ष्ये च वैयर्थ्यादव्याप्तेरपि सम्भवात् ॥

दृष्टान्ताविनाभावयोः व्याप्तिपक्षयोश्च प्रागेव प्रतिक्षिप्तत्वात्, हेतुपर्यायस्य च साधनस्य पञ्चा(व)यवभाजो यथोक्तोपनयभाक्त्वेन आत्माश्रयत्वात् अस्य(अन्यथा?) अन्यत्रापि तदुपन्यासवैयर्थ्यात्, उपमानस्य च साधर्म्यरूपत्वे वैधर्म्यरूपत्वे वैधर्म्योपनये साधर्म्योपनये वाऽभावात् अव्याप्तेः न इदं लक्षणं युक्तम् ॥

उपनयानन्तरं सहेतुकं प्रतिज्ञायाः पुनर्वचनं निगमनं–इत्यपि न—

विशेषण(स्य दुष्टत्वा)दुपनीतिनिराकृतेः ।
स्वाश्रयत्वात्फलाभावात् प्रतिज्ञायाश्च दुःस्थितेः ॥

उपनयस्य अपनीतत्वेन 'उपनयानन्तरं' इति विशेषणस्य असम्भवित्वेन दुष्टत्वात्, हेतोश्च निगमनावयवित्वे ' सहेतुकं ' इति वदता स्वाश्रयत्वापत्तेः, अन्यथा अन्यत्रापि तदुक्तेः अफलत्वात्, प्रतिज्ञायाश्च प्रत्याख्यातत्वात्, न इदमपि लक्षणं युज्यते ।

किञ्च—उदाहृत्युपनीतिभ्या(मितरेषां) प्रसिद्धितः ।
पञ्चावय(व)ता हेतोर्न वाच्या पुनरुक्तितः ॥

द्वाभ्यामेव उदाहरणोपनयाभ्यां व्याप्तिपक्षधर्मतासाधकाभ्यां इतरेषां अवयवानां प्रसिद्धेः उद्धृतत्वात् न पञ्चावयवता पृथक्त्वेन हेतोः वक्तव्या, पुनरुक्तिप्रसङ्गात्, अर्थसिद्धस्यैव अर्थस्य पुनर्वाचकशब्देन उक्तौ पुनरुक्तेः अतिव्यक्तत्वात् इति ॥ ४६ ॥

यत्तु–निगमनस्य निर्णयरूपतया कथाप्रवृत्तिहे(तु)त्वं–इति तत् न—

तस्या निर्वचनायोगादव्याप्तेरफलत्वतः ।
पूर्वलक्षणसंत्यागात् प्रमाणादिपराकृतेः ॥

केयं कथा नाम ? (१) वादिप्रतिवादिनोः पक्षप्रतिपक्षपरिग्रहः कथा—इति

चेत्, न, वादिप्रतिवादिशब्दाभ्यां पक्षप्रतिपक्षशब्दाभ्यां च तत्तद्विशेषोक्तौ अव्याप्तेः। न हि वादिविशेषेण पक्षविशेषं गृहीत्वा प्रतिवादिविशेषेण च प्रतिपक्षविशेषं आदाय क्रियमाणा कथा विशिष्टपक्षनिविष्टा तादृगेव कथान्तरं अनुगन्तुं अर्हति; विशेषणं (विशेषाणां?) मिथोव्यावृत्तानां अन्योन्यानुवृत्तेः अयुक्तत्वात्, तत्सामान्योक्तौ च असम्भवित्वात्। न हि वादिप्रतिवादिशब्दाभ्यां पक्षप्रतिपक्षशब्दाभ्यां च तत्तत्सामान्यसङ्ग्रहे कथाप्रवृत्तिः उपपद्यते; तत्सामान्यनिर्वर्त्यकथायाः लोकसिद्धत्वाभावात्, तस्याः विशेषानुसारित्वात्; तत्तत्कथाकाले सन्निहितत(त्त)द्व्यक्तिविशेषोक्तौ अपि—लक्षणस्य अननुगतार्थत्वात्, परिग्रहस्य च प्रमितत्वे अप्रमितत्वे च कथायाः विफलत्वात्। न हि पक्षादिपरिग्रहस्य प्रमितत्वे च वादिप्रति(वादि)नोः उभयोरपि निर्धारणस्य सिद्धत्वात् तादर्थ्येन विचारात्मककथाप्रारम्भः सम्भवति॥ प्रत्येकं वादिनो निर्णयेऽपि परस्य तथाज्ञापनाय कथा—इति चेत्, न, तज्ज्ञापनस्य प्रमाणफलतया तस्यैव वक्तव्यत्वात्। (२) तदुक्तितद्गुणदोषनिरूपणात्मिका सा—इति चेत्, न, तथा सति पूर्वलक्षणोपेक्षाप्रसङ्गात्। न च इदमेव अस्तु लक्षणं, प्रमाणादेः अपाकृतत्वात्। न हि प्रमाणस्य सामान्यतो विशेषतश्च निराकृतत्वात् तदुक्तिर्वा तद्गतगुणादिविचारणात्मिका वा वचनसन्दृब्धिः सिध्यति।

तस्मान्न युक्तायुक्तोहकथा कथकसंश्रिता।
प्रतीतिपथमायाता व्यवहाराङ्गतां गता॥

(१) प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहो वादः—इत्यपि न।

प्रमाणादिपदार्थानां व्यक्तिजातिविभागतः।
अव्याप्त्यसम्भवौ स्यातां नापि युक्तं विशेषणम्॥

प्रमाणादिपदानां तत्तद्व्यक्तिविषयत्वं चेत् कथं अव्याप्तिः न भवेत्, प्रमाणादिव्यक्तिविशेषायत्तसाधनादिविशेषा(ष?)भाजो वादस्य वादान्तरे अनुगतेः अयोगात्। न च सिद्धान्तव्यक्तेः अविरुद्धोऽपि सिद्धान्तव्यक्त्यन्तरविरुद्धतां निरोद्धुं अर्हति। प्रमाणादिपदानां तत्तज्जातिविषयत्वे च असम्भवित्वं आसज्येत। न हि प्रमाणमात्रं तर्कमात्रं च निमित्तीकृत्य साधनादिमात्रभागी सिद्धान्तमात्राविरुद्धो वादो नाम कश्चित् निश्चितोऽस्ति॥

किं च पञ्चावयवोपपन्नत्वं? प्रतिज्ञाद्यवयवभाक्त्वं पक्षधर्मत्वादिरूपत्वं वा?

न उभयथाऽपि, प्रमाणपदेन गतार्थतया पुनरुक्तिप्रसङ्गात्। अनुमानमपि प्रमाणं, तत्र च यथोक्तपञ्चावयवोपपन्नत्वं उपगतं; तथा च प्रमाणपदेनैव अस्य प्राप्तत्वात् कथं पुनरुक्तौ पुनरुक्तिः न भवेत् । नापि—स्वपक्षसाधनं परपक्षग्रहणं तयोः समर्थनं, अपशब्ददोषवर्जनं च तथा—इति युक्तं, साधनोपालम्भपदाभ्यां गतत्वेन पुनरुक्तितादवस्थ्यात् । न च—शब्ददोषवर्जनं-यत्किञ्चित्सद्दूषणनिर्हरणं, दोषभेदभाक्त्वेऽपि तत्सम्भवात्; न च सर्वदोषनि(र)सनं—तस्य दुर्ज्ञानत्वात् भूतभविष्यद्वर्तमानपुरुषोत्प्रेक्षयोः निरङ्कुशत्वात् ॥

(२) वीतरागकथा वादः—इत्यपि न—

वीतरागोऽपि जल्पादौ कदाचित्परिवर्तते ।
कथा तस्यैव वादश्चेन्न सामान्यनिरासतः ॥

किं हि वीतरागस्य कथा वाद एवेति नियम्यते, किञ्च (किं वा?) तस्यैव कथा (वा)दः—इति उच्यते ? न आद्यः; वीतरागस्यापि कदाचित् वैदिकमार्गपरिपालनार्थं जल्पादौ प्रवृत्तेः इष्टत्वात् । दृश्यते हि म्लेच्छप्रायैः अतितुच्छैः नास्तिकैः आस्तिकमार्गे श्रुतिस्मृत्यनुसारिणि परिभूते पराङ्मुखेषु छान्दसेषु स्वच्छधियां विगतरागद्वेषादिदोषाणामपि तद्वृद्धिसंरक्षणार्थं संरम्भेण प्रवृत्तिः । न च तादृशी प्रवृत्तिः जल्पादेः अन्यत्र कल्पते । न च-वीतरागस्यैव कथा वादः स्यात्—इति वाच्यं, सामान्यलक्षणनिरासेनैव निरस्तत्वात्, सरागस्यापि तत्र प्रयोजनविशेषविवक्षया प्रवृत्तिदर्शनाच्च । एतेन—( ३ ) वीतरागयोः गुरुशिष्ययोः वचनसन्दृब्धिरूपा प्रश्नप्रतिवचनात्मिका कथा तथा-इति निरस्तम् ॥

किञ्च-सर्वत्र वीतरागत्वं न तन्निर्णयदर्शनात् ।
क्वाचित्कं तत पुनारागविषये मृष्यतेतराम् ॥

न खलु गुरुशिष्ययोरपि सर्वत्र वीतरागत्वं, तत्र निर्णयार्थित्वाभ्युप(ग)मात् । क्वचित् पुनः वीतरागत्वं सत्यामपि विजिगीषायां उपपद्यते ॥

यथोक्तोपपन्न(ः) छलजातिनिग्रहस्थानसाधनोपालम्भो जल्पः-इत्यपि न।

आद्योदितो यदा वादो न तदा स्याद्विशेषणम् ।
छलादीनां (च) दूष्यत्वात् (तत)तत्कार्यभासता ॥

वादलक्षणस्य प्रागेव प्रतिक्षिप्ततया यथोक्तोपपन्नत्वविशेषणस्य अनुपपन्नत्वात्, छलादीनां च निराकरिष्यमाणत्वात्, तैश्च साधनोपालम्भयोः आ-

भासत्वात् । अन्यथा तेषामपि सदुत्तरस्य प्रसङ्गात् न कल्पते जल्पलक्षणम् ॥

स.(प्रति)पक्षस्थापनाहीनो वितण्डा—इत्यपि न ।

उभयोरपविद्धत्वात् सर्वनामार्थहानतः ।
पक्षस्य च विशेषत्वे नात्यापत्तिः कथं भवेत् ॥

वादजल्पयोः उभयोरपि निरस्ततया सर्वनाम्नो निरालम्बनत्वात्, पक्षस्य च विशेषत्वे तदीयस्थापनाराहित्यस्य सर्वकथास्वपि सिद्धत्वात्, पक्षमात्रस्थापनाहीनत्वस्यापि तथात्वात्, न काचित् वितण्डा नाम कथा पण्डितहृदयपुण्डरीकं अधिरोहति ॥

(१)अनभिप्रेतार्थकल्पनया शब्ददूषणं छलं—इत्यपि न ।

अव्याप्तिवाक्यापार्थक्ये कस्यचिद्ग्रहणं यदि ।
सर्वेषां ग्रहणेऽज्ञानं, शब्दशब्द(स्तु) ते कुतः ॥

किमिह वादिप्रतिवादिमध्यस्थानां अन्यतमस्य अनभिप्रेतत्वं (सर्वेषां वा?) । किञ्च अत्र (प्र)माणा(ना)मपि प्रथमे कथं न अव्याप्तिः, अन्यतमस्य वादित्वे प्रतिवादित्वे मध्यस्थत्वे वा तत्तदनभिप्रेतार्थकल्पनया तत्तादितरतद्दूषणवचनस्य छलत्वानुपपत्तिप्रसङ्गात्; यस्य कस्यचित्–इत्यनिर्णये च वाक्यस्य आपार्थक्यं आपद्येत, पदार्थनिर्धारणासिद्धौ तदन्वितविशिष्टार्थबोधने वाक्यस्य असमर्थत्वात् । न द्वितीयः, सर्वेषां अनभिप्रेतत्वस्य दुर्ज्ञानत्वात् । न हि भूतानां भवतां भविष्यतां च सर्वेषां वादिप्रभृतीनां अनभिप्रेतत्वं कुत्रचिदर्थे कस्यचित् असर्वज्ञस्य विज्ञातुं शक्यते ॥ एतेन–(२) प्रयोक्तुः अनभिप्रेतार्थकल्पनया प्रतिषेधवचनं छलं—इति प्रत्युक्तं, प्रयोक्तु(:)शब्दार्थस्य प्रागुक्तन्यायेन विकल्पासहत्वात् । न च शब्दविशेषणस्य अर्थ(वत्-)त्वं, व्यावृत्त्यभावात् ॥

छलेऽसिद्धे कुतः सिद्धिस्त्रैविध्यस्य कथ्यताम् ।
न हि स्वरूपेऽसंसिद्धे तद्भेदो भागितां भजेत् ॥

(१)स्वव्याघातप्रसङ्गो जातिः–इत्यपि न ।

स्वशब्दार्थस्य निर्वक्तुमशक्तेर्व्याप्तिभङ्गतः ।
असम्भवाच्च सर्वत्र व्याघातः सिद्धिमश्नुते ॥

स्वशब्दस्य वादिप्रतिवादिनोः अन्यतरविषयत्वं प्रसङ्गविषयत्वं वा ? प्रथमे, तयोरेव अन्यतरस्य व्याघाती प्रसङ्गो न जातिः स्यात् । यदि वादिनो व्याघातं आपादयन् प्रसङ्गः तदीयस्य जातिः उच्यते, तर्हि प्रतिवादिनो व्याघा-

तौ प्रसङ्गो न जातिः भवितुं अर्हति । उभयोरपि प्रसङ्गयोः व्यवस्थायाः जातित्वे कथं अव्याप्तिः व्यक्ता न भवेत् । प्रसङ्गस्य स्वशब्दार्थत्वे तद्विशेषविवक्षायां अव्याप्तिः । प्रसङ्गविशेषायो(°विशेषो ?) हि स्वस्य व्याहतिं आवहन्नपि न प्रसङ्गान्तरं आस्कन्दति । तन्मात्रविवक्षायां असम्भवित्वम् । नं हि कुत्रचित् प्रसङ्गे व्याघातभाजि सर्वे प्रसङ्गाः तथा भवितुं उत्सहन्ते । व्याघातश्च मिथोविरोध्यात्मा कुतः सर्वेषु जातिभेदेषु सम्भवति, क्वचित् तद्भावेऽपि सर्वत्र तदभावात्। यथाकथञ्चित् तस्य सार्वत्रिकत्वेऽपि स चेत् आपातिकः स्यात्, अजातिष्वपि भवेत्, प्रातिभासिकस्य व्याघातस्य सर्वत्र सुलभत्वात्। निरूप्यमाणे तु न क्वचिदपि व्याघातः सिध्यति । स हि मिथोविरोध्यात्मा विरोधिसर्वानुगते(तो?) निर्वक्तुं अशक्ये(क्यो?) न सिध्यति ॥ एतेन-(२) स्वव्याघातकं उत्तरं जातिः—इत्यपि प्रत्युक्तम् । (३) समीकरणाभिप्रायेण प्रसङ्गो जातिः—इत्यपि न ।

अभिप्रायस्य हेतुश्चेद्विषयोऽव्याप्तिरापतेत् ।
तन्मात्रविषयत्वे च स्यादसम्भवि लक्षणम् ॥

समीकरणाभिप्रायस्य हेतुविशेषविषयत्वविवक्षायां अव्याप्तिः आपद्येत, स्वकीयेन दुष्टेन हेतुविशेषेण सह परकीयस्य हेतुविशेषस्य समीकरणाभिप्रेतेऽपि प्रसङ्गान्तरे हेतुभेदादेव तदभावात् । हेतुमात्रत्वाभिधित्सायां च असम्भवि लक्षणं भवेत् । न हि स्वकीयेन हेतुमात्रेण परकीयस्य हेतुमात्रस्य समीकरणाभिप्रायः सम्भवति ॥ एतेन (४) प्रतिवादिना(°वादेन?) प्रतिवादिनः समीकर(णं) अभिप्रेत्य प्रसञ्जनं—इति प्रत्यूढम् ॥

विशेषे व्याप्तिराहित्यादविशेषत्वसम्भवात् ।
जातेरेवमयोगे न चतुर्विंशतिधा भिदा ॥

पराजयनिमित्तं निग्रहस्थानं-इति अयुक्तम् ।

अदृष्टादावतिव्याप्तेरसाधारण्यदूषणात् ।
निमित्तस्य च लिङ्गत्वे तद्दोषे दुष्टमेव तत् ॥

अदृष्टादेः सर्वोत्पत्तिमन्निमित्तस्य पराजयेऽपि निमित्तत्वात् तत्र अतिव्याप्तिः आपतति । असाधारण्यं तु प्रागेव दूषितत्वात् न व्यभिचारं वारयति । यदि तु निमित्तशब्दस्य लिङ्गविषयत्वात् न अदृष्टादौ अतिव्याप्तिः तदा लिङ्गशब्दस्य अविनाभूतविषयत्वात्, अविनाभावस्य निरस्तत्वात् असम्भ-

वित्वं; तद्वद्योतकस्य तदर्थत्वे–तत्कारणत्वस्य अदृष्टादौ अपि इष्टत्वात् उक्ता-तिव्याप्तेः उद्धारासिद्धिः; तत्करणत्वस्य तथात्वे–करणनिराकरणादेव असम्भ-वित्वतादवस्थ्यम् ॥ (२) कथकाशक्तिसूचकं निग्रहस्थानं–इत्यपि (न)।

दुःस्वप्नादावतिव्याप्तेर्विशेषणसमीरणे ।
कथयोरितिपूर्वोक्तन्यायसाम्यान्न तत्तथा ॥

कथकस्य वा कथयोर्वा यत् अशक्तिं सूचयति तत् निग्रहस्थानं इत्युक्ते, दुःस्वप्नदुर्निमित्तयोरपि तथात्वात् अतिव्याप्तिः । तस्य तयोर्वा कथायां अशक्तिसूचकं तथा–इति विशेषणेऽपि पूर्वोक्तन्यायेन कथयोर्दुर्वचत्वात् न उक्तं लक्षणं युक्तम् ।

निग्रहस्थानसंसिद्धिर्यदि नास्ति तदा कथम् ।
द्वाविंशतिप्रभेदेन तदवान्तरभे(द)गीः ॥

तस्मात्—अनुमानं नाम न किञ्चित् निर्वचनयोग्यं–इति स्थितम् ॥४८॥

आगमोऽपि न निर्वक्तुं शक्यते लक्षणादृते ।
शब्दस्य दुर्निरूपत्वात्तल्लक्षणमशिक्षितम् ॥

(१) शब्दविज्ञानात् असन्निकृष्टार्थनिश्चिता बुद्धिः शब्दप्रमाणं–इति तल्लक्षणं—इति चेत्, न; शब्दस्य वर्णत्वेन स्फोटत्वेन दुर्निरूपत्वात्; वर्णानां प्रत्येकं अवाचकत्वात्, तत्समुदायस्य तद्भेदाभेदाभ्यां दुर्भणत्वात्, उत्तर-वर्णोच्चारणकाले च पूर्ववर्णापवर्गात्, तन्नित्यत्वस्य च उपलब्धिविरुद्धस्य अप्रा-माणिकत्वात् । पूर्वपूर्ववर्णोपलम्भाहितसंस्कारसहितः अन्त्यवर्णोपलम्भः समुदायं गोचरयति–इति चेत्, न; तस्य तन्मात्रविषयत्वात्, संस्काराणां च तत्तद्वर्णस्मृत्युपनायकत्वात् तेषां तस्य च एककार्यत्वे नियामकानुपपत्तेः समु-दायबुद्धेः असिद्धत्वात् । अन्त्यवर्णोपलम्भानन्तरं सर्वे संस्काराः सम्भूय स्मृ-तिं एकां उत्पादयन्ति, ततः समुदायधीः–इति चेत्, न, तथा सति शब्दस्य प्रत्यक्षत्वायोगात् स्मृतिविपरिवर्तिनोऽपि तस्य भेदाभेदाभ्यां दुर्निरूपता(ता)-द(व)स्थ्यात् । तस्मात् न वर्णा(त्म)कः शब्दः अर्थप्रत्यायकः सिध्यति ॥

नापि स्फोटात्मके शब्दे प्रमाणम् । एकशब्दप्रतीतिस्तु (एकः शब्दः–इति प्र०?) वर्णविषयत्वात् न स्फोटं गोचरयति । 'गौरित्येकमिदं पदं'–इ-त्यादौ हि प्रयोगे गकारादयः परं वर्णाः भासन्ते, न तु लभ्योऽर्थान्तरस्फोटो दृश्यते । बहुष्वपि तेषु प्रतीत्यनुरोधात् उपाधिवशात् वृक्षादिषु वनादिबुद्धि-

वत् एकत्वबुद्धिः अविरुद्धा सिध्यति। न च वर्णानां अर्थवादे च स्फोटव्यञ्जकत्वं प्रतीत्याऽपि प्रकल्पते। अतः शब्दस्य दुर्निरूपत्वात् न शब्दविज्ञानं नाम किञ्चित् उपपद्यते॥

सन्निकृष्टत्वं च अर्थस्य ज्ञातत्वं इष्टम्। उक्तं हि—

"असन्निकृष्टवाचा च द्वयमत्र जिहासितम्।
ताद्रूप्येण गृहीतत्वं तद्विपर्ययतोऽपि वा॥" इति॥

न च धर्मादेः जडस्य अज्ञानात्मकस्य अज्ञातत्वं विज्ञातुं शक्यं, अज्ञानस्यापि तत्प्रसङ्गात्। न च तस्यैव अज्ञानस्य तद्विषयत्वं, एकत्र विषयविषयीभावायोगात्। न च अन्यत् अज्ञानं अस्ति, एकेनैव तत्प्रयुक्तकार्यसिद्धौ तद्भेदकल्पनाकारणाभावात्। चिदात्मनि अज्ञातत्वसम्भवेऽपि कर्मकाण्डे लक्षणस्य अव्याप्ति(स?)त्वं प्रागुक्तरीत्या स्थितम्। तस्मात् न उक्तलक्षणलक्षितं शब्दप्रमाणं युक्तम्॥

(२) आप्तवाक्यं आगमः—इत्यपि न।

आप्तस्य दुर्निरूपत्वादव्याप्तेरतिसक्तितः।
पदासिद्धौ कथं वाक्यं पदं च न निरूप्यते॥

आप्तस्यैव अनिर्धारणे तदीयवाचां आग(म)त्वं कुतः सिध्यति। प्रमितार्थवादिनः तथात्वे, विशेषेण प्रमितौ—अव्याप्तिः। कस्यचित् अर्थविशेषस्य प्रमितस्य प्रवक्ता चेत् आप्तः स्यात्, तर्हि ततोऽन्यं अर्थं प्रमितमपि प्रतिपादयन् कथं आप्तो भवेत्। सामान्येन प्रमितौ—असम्भवित्वम्। न हि कश्चित् अनीश्वरः सन् अर्थमात्रप्रमेयप्रतिपादकोऽस्ति। यत्किञ्चित्प्रमाणप्रमितौ अपि—तदनिर्णये तदेव असम्भवित्वम्। न हि प्रमाणविशेषेण प्रमितं अर्थं अपहाय अन्यत्र कुत्रचिदर्थे प्रवक्ता कश्चित् आप्तो निश्चितोऽस्ति। प्रमाणविशेषनिर्णयेऽपि—सैव अव्याप्तिः। न हि प्रमाणविशेषेण प्रमितं अर्थविशेषं प्रतिपादयति आप्ते प्रमाणान्तरेण प्रमितं अर्थान्तरं प्रतिपादयन् आप्तो युक्तो भवितुम्। यथाकथञ्चित् प्रमितार्थवादित्वस्य विप्रलम्भकेऽपि सम्भवात् अतिव्याप्तिः। सर्वथा प्रमितार्थवादित्वस्य आप्तेऽपि क्वचित् असम्भवात् अव्याप्तिः।

आप्तो हि प्रमितं अर्थं वदन्नपि न तं सर्वात्मना प्रमातुं प्रभवति,

"सर्वात्मनाऽर्थो ज्ञानेन केनचिन्न हि गृह्यते।"—

इति न्यायात्॥

(१) वाक्यं च पदसमुदायः। स च समुदायिभ्यो दुर्निरूपो भेदाभेदाभ्यां—इत्युक्तम्।

किञ्च पदं उच्यते ? (१) सुप्तिङन्तम्—इति चेत्, न, प्रत्येकमिलितविकल्पासहत्वात्। न हि सुबन्ततिङन्तं शब्दरूपं प्रत्येकं पदसंज्ञकं—इति युज्यते, प्रत्येकमेव व्यभिचारात्। न च मिलितं किञ्चन शब्दरूपं अस्ति यस्य पदत्वं उच्यते॥ एतेन—(२) वर्णाः विभक्त्यन्ताः पदं—इति प्रत्युक्तं, सुपां तिङां च विभक्तित्वात् तदन्तानां वर्णानां पूर्ववत् विकल्पासहत्वात्। न च लुप्तविभक्तिकानां अव्ययानां विभक्त्यन्ततया पदत्वं उचितम्॥

न च—(२) आकाङ्क्षासन्निधियोग्यतावन्ति पदानि वाक्यं—इति युक्तं, पदानिर्णये तदुपवर्णनस्य असङ्गतत्वात्॥

(३) अभिधानशक्तिजः अज्ञातविषयः बोधः आगमः—इत्यपि न।

अभिधानस्य पूर्वोक्तन्यायाद्वक्तुमयुक्ततः।
अज्ञातत्वस्य धर्मादौ नि(र)स्तत्वात् ( न सम्भवः॥ ? )
तदेवमागमो नाम न मानमुपपद्यते।
तदभावे त्वदृष्टार्था प्रवृत्तिस्ते कथं भवेत्॥
अतो विचारशून्योऽयं शब्दः श्रोत्रैकगोचरः।
दृष्टादृष्टप्रवृत्तीनां हेतुरिष्टो मनीषिभिः॥ ४९॥

सदृशदर्शनात् अज्ञाते सदृशान्तरे बुद्धिः उपमानं—इति अयुक्तम्।

यथाकथञ्चित्सादृश्यं सर्वत्रैवास्ति वस्तुषु।
सर्वात्मना तु सादृश्यं क्वापि नो सिद्धिमश्नुते॥
अतोऽत्यापत्तिदुष्टं तदसम्भवि च लक्षणम्।
नोपमानप्रसिद्ध्यर्थं सामर्थ्यं प्रतिपद्यते॥
वैसादृश्यधिया याऽपि धीस्तादृश्युपजायते।
सा कीदृशी तवाभीष्टा नोपमं(मा?)लक्षणाग(°र्णं म?)त(म्)॥

अनुपपन्नदर्शनात् अज्ञातोपपादके बुद्धिः अर्थापत्तिः—इत्यपि न।

किमर्थस्याथवाऽन्यस्य भवता(तो?)ऽनुपपन्नता।
अभीष्टा, प्रथमेऽव्याप्तिर्द्वितीयेऽपि तथैव सा॥

यदि तावत्—अनुपपन्नं अर्थं उपलभ्य तदुपपादनार्थं अज्ञाते अर्थान्तरे बुद्धिः—अर्थापत्तिः उच्यते, तदा श्रुतार्थापत्तौ अव्याप्तिः। तत्र हि वाक्यैकदेशं

अनुपपन्नं दृष्ट्वा वाक्यैकदेशान्तरं कल्प्यते। यदि पुनस्तु (२) तस्य शब्दैकदेशस्य अनुपपत्तौ तदुप(प)त्त्यर्थं उपपादके शब्दान्तरे बुद्धिः—अर्थापत्तिः इष्टा, ततो दृष्टार्थापत्तौ अव्याप्तिः । तत्र हि दृष्टस्य अर्थैकदेशस्य (स)त्तानुपपादकत्वेन अर्थान्तरं कल्प्यते। न च साधारणी काचित् अनुपपत्तिः अस्ति यतोऽव्याप्तेः उद्धारः सिध्येत ॥

योग्यानुपलब्धिनिमित्तकं अर्थाभावज्ञानं अभावः—इत्यपि न।

तज्ज्ञानविरहोऽज्ञानाद्यदि व्यर्थं विशेषणम्।
विशिष्टानुपलम्भाच्चेदन्योन्याश्रयता तदा ॥

योग्यता हि विषयव्यतिरिक्तोपलब्धिकारणसंपत्तिः, ताथविधयोग्योपलब्धिव्यतिरेकश्च तदनुपलब्ध्या वा तदभावेन वा अवसातव्यः। प्रथमे (१) तन्मात्राद्वा (२) विशिष्टानुपलब्धेर्वा तद्धीः। न आद्यः, लक्षणेऽपि विशेषणवैयर्थ्यात्, उपलब्धिकारणानुपलब्धिमात्रात् योग्यानुपलम्भनिर्धारणवत् अर्थानुपलब्धिमात्रात् अर्थाभावनिर्धारणसिद्धेः। कारणानुपलब्धिमात्रात् योग्यानुपलब्धिनिर्धारणे च अनुपलब्धिमात्रात् निध्यादीनामपि विरहो निर्धार्येत । (२) यदि पुनः विशिष्टानुपलब्ध्या योग्योपलम्भाभावोऽवगम्येत तदा योग्योपलब्धिविरहे अवगते विशिष्टानुपलब्धिसिद्धिः इति आत्माश्रयता। यदि तु कारणाभावादेव योग्योपलम्भाभावावगतिः तदा विषयव्यतिरिक्तोपलब्धिकारणसंपत्त्युपपत्तेरेव योग्यात् तदभावात् तत्सिद्धौ परस्पराश्रयत्वम् । न च अज्ञातो योग्यानुपलम्भः सत्तयैव अभावज्ञानहेतुः, ज्ञातकारणान्तर्भावाभ्युपगमात्, देवदत्तादेश्च सभातो निर्गतस्य तत्र ज्ञानयोग्यताविरहे सति अभावनि(श्च)यप्रसङ्गात्। तस्मात् न प्रमाणविशेषनिरुक्तिः ॥

मानमेयौ समाश्रित्य व्यवहारो द्विधा स्थितः।
अविद्यावादमालम्ब्य स सर्वोऽपीह निर्वहेत् ॥

प्रमाणप्रमेयादिव्यवहारस्य लौकिकस्य वैदिकस्य च प्रसिद्धस्य अविचारितरमणीयस्य अनाद्यनिर्वाच्यां अविद्यां आश्रित्य प्रत्यगात्मनि प्रवृत्तस्य न काचित् अनुपपत्तिः सत्यां अविद्यायां—इति सिद्धम् ॥ (५०) ॥

स्मृतिः अपि न तथा हि निरूपणं अर्हति।

तथा हि—संस्कारमात्रजा धीर्न स्मृतिरित्युपपद्यते।
मात्रचो दुर्विवेचत्वादन्येषामपि सङ्ग्रहात् ॥

न हि—(१) संस्कारमात्रजन्यं ज्ञानं स्मृतिः—इति युज्यते, मात्रचो हेत्वन्तरन्यासे लक्षणस्य असम्भवित्वात्, आत्मादेरपि तद्धेतुत्वाभ्युपगमात्। सम्प्रयोगस्यैव प्रतिषेधेऽपि तद(व)स्थं असम्भवित्वं, तस्याः परम्परया तद्धेतुत्वात्। संयुक्ते हि विषये सादृश्यसन्दर्शनादिसमुद्बुद्धसंस्कारसामर्थ्येन स्मृतेः उत्पत्तिः उपगम्यते। सम्प्रयोगस्य परम्परया स्मृतिहेतुत्वेऽपि साक्षात् अतद्धेतुत्वात् न असम्भवित्वं—इति चेत्, तर्हि संस्कारस्यापि न साक्षात् तद्धेतुत्वं, निरपेक्षत्वलक्षणसाक्षात्त्वस्य तस्मिन् असम्भवात् ॥ (१) अव्यवधानं साक्षात्त्वं–इति चेत्, न, समुद्बोधव्यवधानात् तस्य अङ्गत्वात्। (२) अव्यवधित्वं–इति चेत्, तर्हि—सम्प्रयोगस्यापि साक्षादेव (त)द्धेतुत्वं; समुद्बुद्धसंस्कारस्य अङ्गत्वेन व्यवधानत्वाभावात्, सम्प्रयोगे सति यावता विना न स्मृतिः तस्य सर्वस्य तदङ्गत्वाङ्गीकारात्॥ अनुमानादेरपि तर्हि संयोगसमुत्थतया प्रत्यक्षान्तर्भावो भवेत्–इति चेत्, न, तदुत्थत्वेऽपि द्वारभेदात् अवान्तरभेदाविरोधात्। प्रत्यक्षे हि इन्द्रियार्थसन्निकर्षे सति ज्ञानोत्पत्तौ न अन्यत् अपेक्षितव्यं ईक्ष्यते। अनुमानादौ पुनः सति अपि सन्निकर्षे लिङ्गादिद्वारभेदो न विरुध्यते॥

तृतीय(गृहीत?)मात्रसङ्गाहि संस्कारोत्थं च यद्भवेत्।
ज्ञानं स्मरणमित्येतन्नासिद्धत्वात्प्रसिध्यति ॥

न हि—(२) गृहीतमात्रविषयं संस्कारजं ज्ञानं स्मृतिः—इति युज्यते, तन्मात्रविषयत्वस्य असिद्धत्वात्, तत्तांशस्य अपूर्वस्यैव परिस्फुरणात्। न अयं आकारः स्मृतेः—इति चेत्, न, पित्ताद्यनुभूतार्थव(त्) तस्यापि तत्र स्फुरणाविशेषात्। वस्तुतस्तु अर्थस्यापि न तदाकारत्वं, अनालिङ्गितबाह्यार्था स्मृतिः इत्यभ्युप(ग)मात्। न च—(३) प्रमात्वानधिकरणत्वे सति संस्कारजन्यत्वं—तल्ल(क्ष)णं—

विपर्यासादिगामित्वात् प्रमाणत्वस्यापि सम्भवात्।
अन्यत्वस्यानिमित्तत्वादनुभूतित्वसम्भवात् ॥

विपर्यासे संशये च अतिव्याप्तेः न उक्तं लक्षणं युक्तम्। न च विपर्यासादेरपि स्मृतित्वमेव, प्रत्ययद्वैराश्यपक्षानभ्युपगमात्, तन्नियमे हेत्वभावात्। नापि प्रमात्वानधिकरणत्वं, पूर्वानुभवानुविद्धस्य अर्थस्य पूर्वानुभवाविषयस्यैव तद्विषयतया ज्ञातार्थत्वेन प्रमात्वोपपत्तेः। न च अननुभवत्वात् अप्रमात्वं; तद्धेत्वभावेन तस्यैव सिद्धत्वात्। अनुभूतिनियतविषयत्वात्। इच्छात(व?)त् अनु-

भूतित्वं—इति चेत्, न, तन्नियतविषयत्वस्यैव असिद्धत्वात्, अपूर्वार्थताया(:) स्मृतेः दर्शितत्वात् अनुभूतितुल्यविषयत्वाभावात्। यत्तु—संस्कारवशात् नियतविषयत्वात् अप्रमात्वं—इति, तत् असत्; अनुभूतिनियतविषयत्वेऽपि प्रत्यभिज्ञायाः तदभावात्। सम्प्रयोगोऽपि तत्र कारणमिति तन्मात्रजन्यत्वाभावात् प्रमात्वं—इति चेत्, न, स्मृतेरपि तन्मात्रजन्यतायाः निरस्तत्वात्॥ तदेवं अशक्यनिरूपणा बुद्धिः—इति सिद्धम्॥ ५१॥

सुखं सुखत्वलभ्यं चेदन्योन्याश्रयताऽऽपतेत्।
सुखत्वस्य च नैवास्ति लक्षणं बहुदोषतः॥

सुखमपि न शक्यं निरूपयितुम्। (१) सुखत्वजात्यधिकरणं तत्—इति चेत्, न, व्यक्तिभेदासिद्धौ तदसिद्धेः इतरेतराश्रयात्।

न च सुखत्वस्य लक्षणं किञ्चिदालक्ष्यते। प्रतियोग्यनधीनत्वे सति स्वभावात् इष्यमाणमात्रवृत्तिजातित्वं—इति चेत्, न, दुःखाभावः सुखमिति पक्षे—विशेषणायोगात्। नापि सुखस्य स्वभावात् इष्यमाणत्वं, आत्मशेषतयैव तस्य तथाभावात्। सुखत्वादेव तस्य तथात्वे स्वपरसुखयोः अविशेषेण इत्व-(ष्य?)माण(त्व)मापद्येत। न च तत् आत्मनो भिद्यते, तस्य निरतिशयप्रीतिगोचरतया तद्रूपत्वाधिगमात्। तद्रूपत्वेन तद्गोचरत्वे—सुखे तदभावः स्यात्॥

एतेन—(२) प्रतियोगिनिरपेक्षत्वे सति स्वभावात् इष्यमाणं सुखं—इत्यपि लक्षणं प्रतिक्षेपणीयं, पक्षभेदेन प्रतियोगिनिरपेक्षत्वस्य स्वभावात् इष्यमाणत्वस्य वाऽसम्भवाभिधानात्। नापि—(३) ज्ञायमाननिरुपाधिककृतिव्याप्यं सुखं—इति तल्लक्ष(णम्)।

तच्छेषत्वात्तथाऽयोगाद्व्याघातादनुमानतः।
अत्यापत्तिर्न चेहास्ति तस्य नात्मत्वनिश्चयात्॥

न हि यथोक्तस्य सुखस्य आत्मशेषत्वात् निरुपाधिककृतिव्याप्यत्वं उपपद्यते। नापि ज्ञायमानत्वं नाम विशेषणं अर्थवत् उपलभ्यते। साध्यस्वभावत्वेन कृतिव्याप्यं कार्यं व्यवच्छेत्तुं इदं अर्थवत्—इति चेत्, न, तस्य स्वर्गादिशेषतया कृतिव्याप्यस्य उक्तकृतिव्याप्यत्वाभावात्। तस्य प्रधानत्वात् न अन्यशेषतया तद्व्याप्यत्वं—इति चेत्, न, तस्य तव असिद्धत्वात्। परमतेन तत्सिद्धावपि न तस्य तथाविधकृतिविषयत्वं सिध्यति, तस्य स्वर्गाद्यनुकूलतया तेन अभ्युपगमात् प्रधानत्ववाचोयुक्तेः रिक्तत्वात्। न च नित्यस्य तस्य कृति-

व्याप्यत्वं, व्याघातात्। न च—तत् अनित्यं, साधनविशेषोपादानात्—इ(ति) वाच्यं, तदुपादानस्य अभिव्यञ्जकवृत्तिविशेषविषयत्वेन अर्थवत्त्वात्॥ न च तथाविधे सुखे मानराहित्यं, अयं घटः एतद्घटेतरानित्यसुखान्या(न्य?ज)न्यः, मेयत्वात्, पटवत्—इति अनुमानात्॥

न च एवं दुःखादि अपि नित्यं अनुमेयं, तस्य अनात्मत्वेन अनित्यत्वावधा(रणा)त्, प्रकृतस्य तु आत्मतया तदभावात्, तदात्मतायाश्च उक्तत्वात्।

निरुपाधिप्रियत्वेन तस्मादात्मैव तद्भवेत्।
तदनात्मत्वधीर्या तु सोपाधिमुपढौकते॥

तत् एवं परोदीरितं सुखं नाम न किञ्चित् अस्ति—इति स्थितम्॥५२॥

नापि-(१) दुःखत्वयुक्तं दुःखं-इति युक्तम्।

दर्शितस्याविशिष्टत्वाद्दुःखत्वस्यानिरूपणात्।
परानन्दतया स्वस्मिन्न च दुःखं घटिष्यते॥

सुखत्वयुक्तं सुखं-इत्यत्र यदुक्तं परस्पराश्रयत्वं, तस्य अत्रापि विशेषाभावात् न दुःखत्वयुक्तं दुःखं-इति लक्षणं सिध्यति। न हि दुःखव्यक्तिसिद्धिं अन्तरेण तदनुगतं दुःखत्वं सेद्धुं अर्हति; दुःखत्वद्वारा च तद्व्यक्तिसिद्धौ कथं इतरेतराश्रयत्वं न भवेत्॥ किञ्च दुःखत्वं निरुपाधिकहेयमात्रवृत्तिसामान्यत्वं-इति चेत्, न; हेयशब्दस्य दुःखवाचित्वे—पूर्वोक्तपरस्पराश्रयत्वतादवस्थ्यात्, तदुपायवाचित्वेऽपि-दुःखवृत्तिदुःखत्वस्य तदुपायवृत्तित्वासिद्धेः असम्भवित्वात्॥ न च दुःखं प्रत्यक्षमपि प्रत्यगात्मगतं अवकल्पते, तस्य परमानन्दरूपतया तदसंस्पर्शित्वात्। न चैवं दुःखस्य स्वातन्त्र्यं; आश्रयान्तराङ्गीकारात्, तद्द्वारा आत्मसम्बन्धेऽपि स्वभावतः तदसम्बन्धात्, बुद्ध्युपाधिनिबन्धनस्य तस्य अवस्तुत्वात्। न च—दुःखस्य दुःखवदवान्तरभेदात् वाच्यस्य आत्मासम्बन्धेऽपि लक्ष्यस्य तदात्मता—इति वाच्यं, परमानन्दरूपताविरोधात् आत्मनः तदात्मत्वायोगात्। (२) प्रतियोग्यनपेक्षत्वे सति स्वाभावतोऽनिष्टं दुःखं-इत्यपि न; सुखाभावो दुःखं-इत्यङ्गीकारे प्रतियोग्यनपेक्षत्वस्य दुर्वचत्वात्, अनिष्टस्य च दुःखत्वे प्रागुक्तपरस्पराश्रयत्वदोषानुषङ्गात्, तदुपायत्वे च असम्भवित्वतादवस्थ्यात्॥

तत्ता तद्योगिता वाऽतः प्रतीचो न प्रकल्पते।
अमन्दानन्दचिद्धातुर्यतोऽयमुपगम्यते॥ ५३॥

इच्छापि न इच्छात्वेन निरूप्यते ।
इच्छानीति धिया तच्चेन्निरूप्यं पूर्वदोषता ।
सा चानित्यैव दृष्टत्वान्न नित्या हेत्वभावतः ॥

यदि पुनः इच्छात्वं इच्छानि–इति प्रत्ययविषयत्वं, कुतस्तर्हि प्रागुक्ता परस्पराश्रयता न प्रसज्येत । तस्याश्च दृष्टयवष्टम्भात् अनित्यत्वमेव युक्तं, विवादस्थलेऽपि–इच्छात्वेन अनित्यानुमानात् । न च–एतत् कार्यं एतत्कार्यजनकानित्येच्छाव्यतिरिक्तेच्छाजन्यं, कार्यत्वात्, घटवत्–इति वाच्यं; कार्यत्वे–व्यतिरिक्तेच्छायाः व्याघातात् सिद्धसाध्यत्वाच्च, अकार्यत्वे–विशेषणप्रसिद्ध्यभावात् दृष्टान्तस्य साध्यविकलत्वात् ॥ न च ईश्वरस्य तदाश्रयत्वं, तयोः भेदे अभेदे भेदाभेदे च धर्मधर्मित्वायोगात्, सर्वत्र च तद्भावस्य प्रातिभासिकत्वात् । तदाश्रितेच्छायाश्च नित्यत्वे किमिति सुखादेः अतथात्वम् । तस्य तदाश्रयस्य अभावात् न नित्यत्वाशङ्का—इति चेत्, न, तुल्यत्वात् । न हि ईश्वराश्रिता काचित् इच्छा दुःखादिवत् असदनुमता समस्ति, तद्विषयानुमानस्य पूर्वोक्तन्यायेन निराकर्तुं अशक्यत्वात् ।

तस्मादिच्छाऽपि तुच्छैव या त्वया परिगीयते ।
प्रतीतिमात्रसंसिद्धा व्यवहाराय कल्पते ॥ ५४ ॥
अन्योन्याश्रयतासाम्याद्द्वेषोऽपि न निरूप्यते ।
द्वेषत्वेन जिहासादेर्न चासौ व्यतिरिच्यते ॥

न हि द्वेषोऽपि द्वेषत्वेन निरूपयितुं शक्यते । तद्धि (त)द्विशिष्टोऽहं इत्यत्र विशेषणत्वम् । तथा च तुल्यं इतरेतराश्रयत्वम् । द्वेषव्यक्तिसिद्धौ तद्विशेष(ण)त्वसिद्धिः तत्सिद्धौ च तद्द्वारा तद्व्यक्तिसिद्धिः—इति कुतो न इतरेतराश्रयत्वम् । न च जिहासातिरिक्तो द्वेषो नाम कश्चित् निश्चितोऽस्ति, दोषदर्शनात् । तद्दर्शनात् उपेक्षायाश्च असमीक्षणात् विवेकिनां एवम्भावेऽपि न अविवेकिनां–इति चेत्, न, तेषामपि दुःखसन्तापवशात् यथाशक्तिचिकीर्षोपलम्भात् । सर्वथाऽपि न इच्छोपेक्षाभ्यां अनिरिक्तो द्वेषः ॥

स चेच्छावत्परेशस्य किं नित्यो नेष्यते त्वया ।
तस्येच्छया समानत्वान्नानीशत्वं प्रसज्यते ॥

तस्यैव ईश्वरे सत्त्वभावात् न नित्यत्वाशङ्का—इति चेत्, न; तस्य सर्गादिविषयेच्छावत् अनिष्टप्रपञ्चोपसंहारफलकद्वेषस्यापि सम्भावितत्वात्, तन्नि-

त्यत्वस्य च—इच्छानित्यत्ववत् अनुमातुं शक्यत्वात्। न च तद्द्वेषास्पदत्वे संसारिवत् अनीश्वरत्वं, इच्छादिमत्त्वेऽपि तुल्यत्वात्।

तस्मान्नैव तव द्वेषो निरूपणपथं व्रजेत्।
तं परित्यज्य शिष्टेषु यतमानः सुखी भव ॥ ५५ ॥
प्रयत्नोऽपि प्रयत्नत्वान्न निरूपणमर्हति।
परस्पराश्रयादुक्तान्न विभागोऽपि शोभते ॥

असद्वा(यउत्साह?)वानहं–इत्यत्र विशेषणत्वं हि प्रयत्नत्वस्य व्यवस्थापकम्। तथा च प्रयत्नव्यक्तिभेदे सिद्धे तदनुगतं प्रयत्नत्वं सिध्यति, तत्सिद्धौ च तद्व्यक्तिभेदसिद्धिः—इति कथं दुरात्मा परस्पराश्रयो न अवतरेत् ॥

प्रयत्नस्य च नित्यत्वं ईश्व(पर्ययं?)रेच्छाचे(व?)त् निरसनीया(यं?), तेन असौ अस्मदादिष्वेव अनित्यश्च—इति कुतो विभागभागी भवितुं उत्सहते ॥

आलस्याभावभिन्ने च न प्रमाणं प्रवर्तते।
तत्र हेतोरसिद्धत्वात्, नानित्यो(°त्येऽपि द्वि)धा भिदा ॥

न च आलस्याभावातिरिक्ते प्रयत्ने प्रमाणं अस्ति। न च प्रतियोग्यनिरूप्यत्वात् कुम्भवत् भावत्वं, आलस्याभाववादिमते हेतोरसिद्धत्वात्। न च धर्मिणो भावा(त्वदु)क्तवत्त्वासिद्धिः; प्रयत्नधर्मिणः एव तद्धर्मित्वात्, अबाध्ये सत्यपदवत् एतस्य अभावे प्रयत्नपदप्रवृत्तेः उपपत्तेः न प्रतियोग्यादिनिरपेक्षत्वम्। ईश्वरे कथं आलस्याभावः स्यात्–इ(ति चेत्,) सिद्धे दुःखाभाववत् इति ब्रूमः, तस्मिन् प्रतियोग्यभावस्य उभयत्रापि तुल्यत्वात्, तदभाव(वा?) भावे च तत्प्रसङ्गात्, भावाभावयोः मिथो विरोधित्वात् अन्यतरनिषेधस्य अन्यतरविधिनान्तरीयकत्वात्। आलस्याभ(ा)वेऽपि सृष्ट्यादिप्रवृत्तिसम्भवाश्रये यावत्तदुपपत्तिव्यतिरिक्ते प्रयत्ने प्रयोजनं अस्ति॥ न च अनित्ये प्रयत्ने जीव(न)पूर्वकत्वं इच्छादिपूर्वकत्वं च इति द्विधा विभागो युज्यते, स्थानत्रयहेतुतया तत्तत्कार्यभेदहेतुतया च तदवान्तरभेदभूयस्त्वसम्भवात् ॥

तस्मादयत्नतो यत्नसिद्धिर्नैव समश्नुते।
यत्नतोऽपि, न मायातो भिद्यते युक्तिगौरवात् ॥ ५६ ॥
गुरुत्वं न (१) गुरुत्वेन निर्वक्तुं शक्यते तव।
दोषस्योक्तस्य सामान्यात्तच्च सामान्यमेव ते ॥

गुरुत्वं हि गुरु इदं—इति विशिष्टप्रत्यये विशेषणत्वात् अवगन्तव्यम्। न च तदवगतिः उदीरितात् इतरेतराश्रयत्वात् उपपद्यते। नापि—पार्थिवाप्य-व्यक्तिसमवेतसामान्यातिरिक्तो—गुरुत्वाख्यो गुणोऽस्ति, तरतमभा(व)स्य व्यक्तिद्वा(रा) जातावपि सम्भावि(त)त्वात्।

(२) लघुत्वप्रतिषेधो वा गुरुत्वमिति गीयते।
भावस्यैष च तस्यापि कारणत्वं घटिष्यते॥

न हि लघुत्वाभावात् अतिरिक्तं गुरुत्वं इति—कुतः तस्य गुणत्वम्। न च अभावस्य पतनहेतुत्वानुपपत्ति(ः), भाववत् तस्यापि कारणत्वाविरोधात्, प्रतिबन्धाभावस्य परेण तु अङ्गीकरणात्। गुरुत्वाभावो लघुत्वं इति तु स्वीकृत-मेव; भावतदभावयोः मिथोभावत्वस्य इष्टत्वात् गुरुत्वमेव भावो न इतरत्—इति तु न शक्यं नियन्तुं, निक(ष्क?)र्मकामु(नु?)पलम्भात्॥

परमाणुषु तन्नित्यमन्यथाऽन्यत्र नेष्यते।
तदभावात्तदुत्पत्तिनाशहेतोश्च सम्भवात्॥

न हि—परमाणुषु गुरुत्वं नित्यं—इत्यङ्गीकर्तुं युज्यते, तेषां तन्नित्यत्वस्य च अभावे तदीयगुरुत्वतन्नित्यत्वयोः असम्भावितत्वात्। न च—कार्ये कारण-गुरुत्वात् उत्पद्यते गुरुत्वं, आश्रयनाशात् च नश्यति—इति शङ्कितव्यं; तदु-त्पादकनाशकाभ्यामेव तद्गतगुरुत्वस्यापि जन्मनाशयोः सम्भवे पृथगेव तत्क-ल्पनायाः विफलत्वात्, तस्य स्वरूपानतिरेकेऽपि दोषाभावात्।

तस्माद्गुरुत्वं श्रद्धेयं न च दोषबहुत्वतः।
पतनं तदृतेऽपि स्यादिति साध्वेव साधितम्॥
अतो मायामयी युक्ता गुरुता लघुता यथा।
तेन गुर्विदमित्यादिर्व्यवहारोऽपि लभ्यते॥ ५७॥
किञ्च द्रवत्वं तज्जात्या न च सिध्यति पूर्ववत्।
न च स्यन्दनहेतुत्वादुक्तदोषसमन्वयात्॥

न हि—(१) द्रवत्वं द्रवत्वजात्यधिकरणं—इति युक्तं, तद्व्यक्त्यसिद्धौ तज्जा-त्यसिद्धेः इतरेतराश्रयस्य पूर्वोक्तस्य दुर्वारत्वात्। (२) स्यन्दनकर्मासाधारणका-रणं तत्—इति चेत्, न, तस्य अन्यथासिद्धतया तत्सिद्ध्यधीनसिद्धित्वेन अन्योन्याश्रयतादवस्थ्यात्।

काठिन्याभावतो भिन्नं न च तत्किञ्चिदिष्यते ।
तस्य स्नेहस(हा)यस्य तथाभावोऽभ्युपेयते ॥

न च काठिन्याभावातिरिक्तं द्रवत्वं नाम किञ्चिदस्ति । तर्हि तूलपिण्डादावपि द्रवत्वधीः स्यात्—इति चेत्, न, स्नेहसहचरितकाठिन्याभावो द्रवत्वं—इत्यभ्युपगमात् तस्यैव च स्यन्दननिमि(त्त)त्वात्, अभावस्य कारणतायाः दर्शितत्वात्। न असमवायिकारणता तस्य—इति चेत्, न, अप्रसिद्धत्वेन प्रत्युक्तत्वात्।

सलिलादौ स्वरूपं तन्न भिन्नमनुभूयते ।
गुरुत्वस्यैव तस्यापि न नित्यत्वादि सिध्यति ॥

न हि सलिलतैलादिषु स्वरूपातिरिक्तं द्रवत्वं किं(चि)त् उपलभ्यते, तदात्मनां अन्तरेण तद्रूपस्य अनुपलभ्यमानस्य अनभ्युपगमनीयत्वात्। न च गुरुत्वस्य इव केषुचित् परमाणुषु द्रवत्वस्य नित्यत्वं, तदभावे तदीयद्रवत्वतन्नित्यत्वयोः अयुक्तत्वात् ॥ एतेन—पार्थिवतैजसपरमाणुषु नैमित्तिकं तत् अनित्यं—इति प्रत्युक्तम् । कार्ये तु, क्वचित् तदुत्पादकेनैव द्रवत्वं उत्पद्यते तन्नाशकाच्च नश्यति इत्युपपत्तौ, नैव हेत्वन्तरं अन्विष्यते । क्वचित्तु निमित्तवशात् उत्पत्तिविनाशौ प्रत्यक्षत्वात् उपगतौ इति न किञ्चिदपि विरुध्यते ।

परेण परिगीतं यद्द्रवत्वं तन्न युज्यते ।
अविद्याविद्यमनं(मानां?) तु प्रतीतिमनुगच्छति ॥ ५८ ॥
स्नेहत्वेन न च स्नेहो विशेषेण निरुच्यते ।
स्निग्धोऽयमिति तत्सिद्धौ पूर्वदोषानिराकृतेः ॥

न हि स्नेहः स्नेहत्वेन निरुच्यते । तद्धि स्निग्धोऽयं—इत्यत्र विशेषणत्वात् अवगम्यते । न च तदवगतिः अवकल्पते, प्रागुक्तपरपस्पराश्रयप्रसङ्गस्य अप्रतिविधेयत्वात् ।

न चाधारोऽस्य नियतो घृतादावपि दर्शनात् ।
तत्रान्यथात्वशङ्का च प्रागेव विनिवारिता ॥
नित्यत्वादिविभागोऽपि पूर्ववन्नास्य युज्यते ।
परमाणोरसिद्धत्वात्कार्ये तादात्म्यसम्भवात् ॥

अतः स्नेहो न च स्नेहो युक्तो युक्तिविपर्ययात् ।
अनिर्वक्तव्यता तस्य वक्तव्या युक्तिगौरवात् ॥ ५९ ॥
संस्कारोऽपि न तत्त्वेन निर्वक्तुमिह शक्यते ।
प्राचीनदोषानुद्धारात्त्रैविध्यं (न) च सिध्यति ॥

न हि संस्कारः संस्कारत्वेन निर्वक्तुं युक्तः, यथोक्तदोषस्य अत्रापि सावकाशत्वात् । न च–तस्य वेगो भावना स्थित(ति?)स्थापकश्च–इति त्रैविध्यं सिध्यति, तस्यैव दुर्वचत्वे तदवान्तरभेदस्य सुतरां अयुक्तत्वात् ।

(१) कर्मासमवायिकारणका(त्वा?)त् वि(शि)ष्टगुणेन(°ष्टप्रत्यक्षेण?) गुणत्वा(वा)न्तरजातीयो वेगः–इति तत् अयुक्तं—

ताद्दग्गुणस्य वेगत्वे स्वाश्रयत्वं प्रसज्यते ।
भेदेऽसम्भविता तस्य न गुणत्वं क्रियाचयात् ॥

यदि हि यथोक्तस्य गुणस्य लिलक्षयिषितवेगाव्यतिरेकः तदा तत्सिद्धौ तत्सिद्धिः–इति स्वाश्रयत्वं, व्यतिरेके च तथाविधस्य गुणस्य अप्रसिद्धत्वात् असम्भवित्वं, साधारणस्यापि तथाविधस्य गुणस्य अप्रसिद्धत्वात् उक्त एव दोषः । न च असौ गमनादावपि गम्यमानो गुणो भवितुं उत्सहते, द्रव्यादन्यत्र तदनभ्युपगमात् । द्रव्यगतो वेगः तद्गते गमनादावपि भाति–इति चेत्, न, तस्य तद्गतत्वसम्भवे तथाकल्पनानवकाशात् । द्रव्यस्यैव गुणवत्त्वनियमात् न अद्रव्ये तन्मुख्यता–इति चेत्, न, तस्य गुणत्वानङ्गीकारादेव तत्र तन्मुख्यत्वोपपत्तेः । गमनादौ अनुगतो बाधविधुरो गुणात् व्यतिरिक्तः तद्धर्मोऽभ्युपगम्यते, प्रकारान्तरानुपपत्तेः ॥ एतेन–(२) मूर्तमात्र(वृत्तिः) संस्कारो वेगः–इति निरस्तं, तस्य गमनादिग(त)त्वानवगतेः मूर्तमात्रसंस्कारत्वस्य दुःसाधत्वात्, संस्कारविशेषणाच्च आत्माश्रयत्वात् ॥

(१) आत्मगुणः संस्कारो भावना—इत्यपि न ।
आत्मनो निर्गुणत्वेन सम्भवो नास्त्यसम्भवात् ।
संप्रत्येव च संस्कारो विचार्यः स्वाश्रयस्तदा ॥

ऐकात्म्यवादे निर्गुणत्वात् आत्मनो यथोक्तलक्षणस्य असम्भवित्वम् । संस्कारस्य च इदानीमेव निरूप्यमाणतया स्वाश्रयापत्त्या विशेषणासिद्धि(ः)॥ (२) बुद्ध्याद्यष्टकातिरिक्तत्वे सति आत्मासाधारणगुणोऽसौ—इति चेत्, न,

बुद्ध्यादेरपि तद्धर्मसिद्धौ विशेषणवैयर्थ्यात्, स्वमतेन तदर्थवत्त्वे सुखादेरपि तथात्वोपपत्त्या अतिव्याप्त्यापत्ते(:)। भविता( भावना? )तिरिक्ताष्टकातिरिक्तसुखादौ न–इति चेत्, तर्हि भावनाधीननिरूपणत्वात् प्रतियोगिनः स्वाश्रयत्वम्। आत्मगुणत्वविशेषणं च निर्गुणात्मवादे न सिध्यति—इति उक्तम् ॥

स्पर्शवन्मात्रवृत्तिः संस्कारः स्थित(ति?)स्थापकः—इत्यपि न; संस्कारविशेषणेन क्षारीकृतत्वात्, वेगविशेषस्य तथात्वेन अतिव्याप्तेश्च। सर्वेषु स्पर्शवत्सु तदव्याप्तेः न—इति चेत्, तर्हि स्थित(ति?)स्थापकविशेषेऽपि तदभावात् अव्याप्तिः, स्पर्शवन्मात्रवृत्तित्वं च स्पर्शे अस्ति इति अतिव्याप्तिः। संस्कारविशेषगुणात् न—इति चेत्, न; तस्य अद्यापि (तवापि?) असिद्धत्वात्, तन्मात्रसिद्धावपि तद्विशेषस्य त(था)त्वाभावात् ॥ न च क्रियाविशेषातिरिक्ते स्थित(ति?)स्थापके प्रमाणं अस्ति, पूर्वावस्थातः अन्यथाभूतस्य पूर्वावस्थायामेव स्थापनलिङ्गस्य क्रियाविशेषविषयत्वेनापि सम्भ(म्भा?)वितस्य भवदिष्टसंस्कारासाधकत्वात् ॥ न च तस्य नित्यत्वानित्यत्वव्यवस्था, संस्कारत्वात् वेगादिवत् अनित्यत्वनियमसिद्धेः ॥

अतिव्याप्तेस्तथाऽव्याप्तेः स्वाश्रयत्वप्रसङ्गतः।
क्रियातिरिक्ते ना(चा?)भावान्न स्थित(ति?)स्थापकः स्थितः ॥
तस्य वेगादिवन्नित्यमनित्यत्वं व्यवस्थितम्।
अतो गुरुत्ववत्तत्र नित्यानित्यभिदा कुतः ॥ ६० ॥

विहितभावा(र्थ)जन्यास्मदतीन्द्रियात्मगुणो धर्मः–इत्यपि—

(श्ये)नादिजनिताधर्मेऽतिव्याप्तेर्मतभेदतः।
विधेरनुगमाभावादव्याप्तेस्तदसम्भवात् ॥
अस्मद्विशेषणायोगादात्मनो निर्गुणत्वतः।
तदभ्युदयभावेऽपि ततो मुक्तिर्न लभ्यते ॥

श्येनादियागजनिताधर्मे धर्मलक्षणस्य अतिव्याप्तेः नैव युज्यते; शेषा-(श्येना?)देरपि विहितत्वस्य "श्येनेनाभिचरन्यजेत"—इत्यादिश्रुतिसिद्धत्वात्, साध्यांशे निषेधेऽपि तदज्ञानवतो विशेषाभावात्, विधेश्च पक्षविशेषपक्षपातेन अनुगतरूपाभावात् अव्याप्तेः; भावार्थशब्दस्य च सामान्यविषयत्वे तन्मात्रजन्यधर्माभावात् असम्भवित्वात्, न हि क्रियामात्रजन्यो धर्मोऽस्ति; विशेषविषयत्वे च अव्याप्तितादवस्थ्यात्, न हि क्रियाविशेषेण धर्मव्यक्तिं जनयता

सर्वा धर्मव्यक्तयो जन्यन्ते; अ(स्म)द्विशेषणस्य च योगिनं अनङ्गीकुर्वतो वैय-र्थ्यात्; सर्वस्य च अनुव्यवसायग्राह्यत्वात् अतीन्द्रियविशेषणायोगात्; तदि-तरेन्द्रियजनितज्ञानाविषयत्वस्य च तदनङ्गीकारपक्षे असम्भवात्, न हि सर्वैः अनुव्यवसायः स्वीक्रियते, येन तदतिरिक्तेन्द्रियकज्ञानाविषयत्वं विशेषणं सम्भा-व्येत; निर्गुणात्मवादे च आत्मगुणविशेषणस्य अयुक्तत्वात्॥ न च तस्य साक्षात् अभ्युदयहेतुत्वेऽपि निःश्रेयसहेतुत्वं, प्रतिषेधशास्त्रविरोधात्। परम्परया तद्धे-तुत्वमेव, श्रुतिस्मृत्योः तथा प्रतिक्र(पादि?)तत्वात्॥

एतेन—प्रतिषेध(षिद्ध?)भावार्थजन्यास्मदतीन्द्रियात्मगुणः अधर्मः—(इति) प्रत्युक्तम्।

उक्तस्य तत्र सर्वस्य व्यक्तत्वादुभयोरपि।
अदृष्टत्वेन[1] (च तयोः?) न च सङ्ग्रहणं भवे(त्)॥
[2]हानिस्तव विभागेन नियमे तादृशा भिदा।
सुलभा, तेन चाधिक्यं सङ्ख्यायाः संप्रसज्यते॥

अवान्तरभेदात् उक्तसङ्ख्यानियमे संस्कारादिष्वपि तद्भेदस्य सुलभत्वा(त्) बाधापत्तेः संख्यायाः यथोक्तायाः रिक्तत्वं स्यात्।

अदृष्ट(त्व)स्य जातित्वं न विदि(हि दृ?)ष्टं तथापि ते।
पावकत्वादितत्त्वेन (सङ्ग्रहो न) विरुध्यते॥

पावकत्वादिना चेद्यदि सङ्ग्रहं सन्दर्शयेत्, (अ)दृष्टत्वस्य अजातित्वेऽपि तेन धर्माधर्मयोः सङ्ग्रहो न विरुध्यते।

न च तस्यास्ति जातित्वे व्यक्त्यभेदादि बाधकम्।
तदभावेऽपि चेज्जातिर्नेष्टयासा(ष्टत्वा?)पत्तिरापतेत्॥
क्रियाविशेषजन्यत्वोपाधिना जातिनाधते(°तिबाधने?)।
धर्मत्वादे(दि?)श्च तेनैव बा(ध)केन निवार्यते॥
धर्माधर्मौ ततस्ते तु समयावगतौ गतौ।
तेनतेनात्मना तेन मायैवेयं विजृम्भते॥ ६१॥

---

१ इतः परं 'धर्माधर्मयोरदृष्टत्वेन' इति मूले। तत्तु तन्मातृकायां टिप्पणीस्थं भ्रमादत्र निवेशितमिति भाति। २ अस्य पूर्वं 'गुणानां चतुर्विंशतित्व' इति मूलपुस्तके वर्तते। तत्तु तन्मातृकागतटिप्पणस्थं मूले लेख-केन संमेलितमित्यनुमीयते।

वैशेषिकगुणः शब्दो वियतोऽभिमतो यदि ।
तयोर्मिथो व्यपेक्षत्वादन्योन्याश्रयता तदा ॥

न हि वियतो गुणत्वेन शब्दो निरूपणं अर्हति, वियतः शब्दगुणत्वेन निरूपणात् तदसाधारणगुणतया शब्दस्यापि निरूपणे कुतो न इत(रेत)राश्रयत्वम् । न च तस्य गुणत्वे विपश्चितां सम्प्रतिपत्तिः, सामान्यवत्त्वे सति संयोगविभागहेतुजातीयेतरत्वस्य तस्मिन् असिद्धत्वात् । न तस्य द्रव्यत्वं इच्छन्तः तथात्वं मृष्यन्ति ।

गुणता नैव संसिध्येदत्र विप्रतिपत्तितः ।
गुणलक्षणमेतस्मिन्न सिद्धं द्रव्यतागतेः ॥
परिमाणप्रतीतेश्च शब्दो नैव गुणो मतः ।
न द(त?)दौपाधिकं व्याप्यं(°धिकत्वं वा?) मुख्यत्वेन्या(नो?)पपत्तितः ॥

शब्दो हि महान् इत्यादिना परिमा(ण)वत्त्वेन परिदृश्यमानो न कुम्भादिवत् गुणो भवितुं उत्सहते । न च तस्य कुम्भादौ इव च मुख्यत्वसम्भवे युक्तं औपाधिकत्वम् । न हि शब्दे भाते महत्त्वादेः अस्ति किञ्चित् बाधकम् ।

न चासौ क्षणिको युक्तः साधकानुपलम्भनात् ।
प्रत्युच्चारणमन्यत्वप्रथा व्यञ्ज(क)भेदतः ॥

न च शब्दस्य क्षणिकत्वं, तत्साधकाभावात् । प्रत्युच्चारणं अन्यथात्वप्रथा तु व्यञ्जकभेदात् उत्प(उपप?)द्यते ।

प्रत्यभिज्ञाविरोधाच्च न च सादृश्यजो भ्रमः ।
अन्योन्यसंश्रयान्नापि विभागस्तत्र मानतः ॥

स एवायं शब्दः–इति प्रत्यभिज्ञाप्रतीतेः न युज्यते ग्रहस्य क्षणिकत्वम्, प्रत्यभिज्ञायाः स्थायित्वव्यवस्थापकत्वात् । न च–असौ सादृश्यकृता ज्वालाप्रत्यभिज्ञावत् भ्रान्तिः—इति युक्तं, तद्भ्रान्तित्वसिद्धौ तदनित्यत्वसिद्धिः, तत्सिद्धौ च सादृश्यकल्पनया तद्भ्रान्तित्वसिद्धिः—इति अन्यो(न्या)श्रयात्वात् । ज्वालाप्रत्यभिज्ञायां तु ज्वालाभेदस्य प्रत्यक्षत्वात् सादृश्यकल्पनया भ्रान्तित्वं सम्भवति ॥

न च अन्त्यस्य ग्राह्यत्वेऽपि शब्दस्य उपान्त्यस्य नित्यानुमेयत्वं—इति विभागः सम्भाव्यते, अन्त्योपान्त्यभावे मानाभावात् । वलयाकारेण शब्दोत्पत्तिरेव स्फोटस्य शब्दत्वं–इति प्रागेव वर्णितम् ॥

न हि वर्णावर्णभेदेन शब्दे द्वैविध्यं, वर्णात्मकशब्दव्यञ्जकत्वेन अवर्णात्मनि ध्वनौ शब्दप्रसिद्ध्युपपत्तेः, तत्तुल्यजातीयतया च क्वचित् तद्भावात्। न च स्फोटस्य शतत्स(शब्दस ?)मवायः, अतिप्रसङ्गात्।

घटा(वर्णा?)दिषु (च) नित्यत्वं प्रलयेष्यक्षमावतः (ष्यक्षमं यतः?)।
न युक्तमस्वतन्त्रत्वान्नान्यत्रातिप्रसङ्गतः॥

* ॥ (६२) ॥

* * *

* ( इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशुद्धानन्दपूज्यपादशिष्यभगवदानन्दज्ञानविरचिते तर्कसङ्ग्रहे द्वितीयः परिच्छेदः। )

---

* मूलपुस्तके कुत्रापि द्वितीयपरिच्छेदान्ताङ्कनादृश्यत्वेऽपि वैशेषिकग्रन्थेषु सामान्यतः 'द्रव्यग्रन्थः गुणग्रन्थः' इत्यादिदर्शनात् अन्तिमगुण'शब्द' विचारान्ते गुणग्रन्थस्य समाप्तेः अत्रैव द्वितीयपरिच्छेदान्तः सम्भाव्यते। कर्मपदार्थमारभ्य आप्रकरणसमाप्ति तृतीयः परिच्छेदः।

अत्र मूलपुस्तके परममूलपुस्तके वा शब्दखण्डनस्य कियानंशः, द्वितीयपरिच्छेदान्तपुष्पिका, ६३ खण्डात्मकः कर्मखण्डनपरो भागः, सामान्यखण्डनस्य च कियानंशः—इत्येतावान् एकपत्रात्मक एकपृष्ठात्मको वा भागो लेखकप्रमादात् पत्रसम्भ्रंशात् वा त्रुटित इति सम्भाव्यते।

( तृतीयः परिच्छेदः । )

*   *   *

न च अनेक(समवेत)त्वं अनेक(त्वसङ्ख्याविशिष्टे समवे)तत्वं, गुणादौ तद्भावा(त्) । न हि द्रव्यातिरिक्तेषु अनेकत्वसङ्ख्या अस्ति । तत्रापि स्वरूपभेदवत्त्वं अस्ति–इति चेत्, न तदभावे तदभावाच्च(त्ा|न) खलु (अ)नेकत्वाभावे स्वरूपभेदत्वं, आकाशादौ अदर्शनात् ।

अद्रव्यनिष्ठे सामान्ये नानेकसमवेतता ।
अद्रव्येऽनेकता(ऽ)भावान्न स्वरूपभिदा ततः ॥

न च (सामान्यं) स्वविषयसर्वगतत्वं, रूपादावपि तुल्यत्वात् । न च व्यावृत्तेश्च अनुवृत्तबुद्धिनिमित्तत्वं, अदृष्टादेरपि तथात्वात् असाधारण्यस्य निरस्तत्वात् ।

विषयव्यापिता जातेर्न रूपादिसमत्वतः ।
नानुवृत्तधियो हेतुरदृष्टादावपीष्टतः ॥

तत्तद्व्यञ्जकवशादेव तत्रतत्र आनुवृत्त्य(अनुवृत्त?)व्यवहारसम्भवे तत्तज्जातिकल्पना(ऽ)योगाच्च कु(तः) सामान्यसिद्धिः ।

व्यञ्जकादेव तत्कार्यसिद्धेर्जातिर्वृथा तव ।
तदभावे कुतो भेदो भेदस्य तदुपाश्रयात् ॥

न हि सामान्याभावे–परापरभावेन द्वैविध्यं–सिध्यति, भेदस्य धर्मापेक्षत्वात् तदभावे (भेद)भावायोगात् ॥

सत्त्वं सामान्यमेवेति कुतोऽयं नियमस्तव ।
व्यावृत्तेरनुवृत्तेर्वाऽविशिष्टा दृष्टता यतः ॥

न हि सत्त्वं सामान्यमेव इति नियन्तुं शक्यं, तस्य पूर्वत्रिकेण अनुवृत्तत्वेऽपि इतरत्रिके व्यावृत्तत्वस्य अविशिष्टत्वेन दृष्टत्वात्; सामान्यवत्सु अनुवृत्तिमात्रेण तन्नियमे गुणवत्सु अनुवृत्तिमात्रेण द्रव्यत्वस्यापि तन्नियमः स्यात् ॥

द्रव्यत्वादेर्विशेषत्वं न च सत्त्वेऽपि तुल्यतः ।
व्यावृत्तेरनुवृत्तेर्वा न विशेषोऽत्र गम्यते ॥

न हि द्रव्यत्वादेः सामान्यविशेषत्वं, सत्त्वेऽपि तुल्यत्वात् व्यावृत्त्यनुवृत्त्योः अविशेषात् । द्रव्यत्वं हि गुणादिभ्यो व्यावर्तते, पृथिव्यादिषु च अनुवर्तते । सत्त्वमपि सामान्यादेः व्यावृत्तमेव द्रव्यादौ अनुवृत्तं दृश्यते ॥

प्रत्यायकादिभेदेन न चान्योन्यं विभिन्नता ।
तद्भेदस्याप्रसिद्धत्वात् तत्परापरगीर्मृषा ॥

न हि प्रत्यायकप्रत्याय्यभेदात् परापरसामान्ययोः अन्योन्यं भिन्नत्वं, तद्भेदस्यैव (अ)संप्रतिपन्नत्वात् । न हि द्रव्यत्वादिना धूमात् अग्नेरिव सत्त्वं प्रत्याय्यते, तस्यापि मेयत्वादिप्रत्यायकत्वेन व्यवस्थायोगात् । न च तस्य व्यापकत्वा(त्) द्रव्यत्वाद्रव्यत्वादिप्रत्यायकत्वं, वह्नेः तादृशोऽपि धूमप्रत्यायकत्वादर्शना(त्॥)
तथा च सामान्ये-परं अपरं-इति परिभाषा मृषैव ।

(ल)क्षणैक्याद्यदैक्यं (तु) तदविशिष्टं हि सर्वतः ।
निरुपाधिषु नार्थेषु व्यावृत्तेतरहेतुता ॥

यत्तु-परापरविभागेऽपि लक्षणाविशेषात् एकत्वं-उच्यते, तत् तुल्यं पदार्थान्तरे(ष्व)पि इति नात्र तत्कृतो विशेषो लभ्यते । लक्षणा(ण?)विशेषप्रयुक्तं खलु एकत्वं द्रव्यादिष्वपि समानं इति नात्र विशेषो युज्यते । निरुपाधि-(धातु?)गतप्रत्यये तत्त्वं पुनः अदृष्टादौ अविशिष्टं-इति प्रत्यादिष्टम् ॥

न च सर्वगता जातिर्नभोवदुपगम्यते ।
न मानेन विना किञ्चिन्निश्चेतुमिह शक्यते ॥

न च (अ)परिच्छिन्नदेशत्वं सामान्यस्य सङ्गच्छते, प्रमाणाभावात् । न हि सामान्यस्य सर्वगतत्वे किञ्चित् निबन्धनं अस्ति । एतेन—सर्वगतमेव सामान्यं व्यक्तेरन्यत्र न उपलभ्यते व्यञ्जकाभावात्—इति निरस्तं, सर्वगतत्वस्य अप्रामाणिकत्वात् ॥

किञ्च—सत्त्वमेकं हि सामान्यमन्यत्तत्रैव कल्पितम् ।
न चाधिष्ठानतोऽन्यत्र कल्पितं सिद्धिमश्नुते ॥

सर्वत्रानुवृत्तं सन्मात्रमेव वस्तुभूतं अभ्युपेतव्यं, सद्व्यवहारानुगतेः सार्वत्रिकत्वात् । तत्रैव च अन्यत् द्रव्यत्वादि सर्वमपि कल्प्यते, द्रव्यत्वादौ सद्व्यवहारस्य कल्पनाधीनत्वात् । न च तत् ततोऽन्यत्र अस्ति, कल्पितस्य अधिष्ठानातिरेकेण सत्ता(ऽ)स्फुरणात् । न च पृथिवीत्वं नाम सत्त्वातिरिक्तं किञ्चित् अस्ति । तद्धि द्रव्यत्वव्याप्यत्वे सति घटपटवृत्ति(:) जातिः उच्यते । न च एवं पृथिवीत्वं निर्वक्तुं शक्यते ॥

द्रव्यत्वस्य निरस्तत्वाज्जातेरपि निरासतः ।
विशेषणं विशेष्यं वा कुतस्तत्रोपपद्यते ॥

न हि द्रव्यत्वस्य निराकृतत्वात् 'द्रव्यत्वव्याप्यत्वे सति' इति विशेषणं अत्र सम्भवति। नापि सामान्यस्य निरस्तत्वात् 'जाति'रिति विशेष्यनिर्देशो युज्यते। पृथिवीत्वव्याप्यघटवृत्तिजातिः घटत्वं, तेनैव व्याप्यपटवृत्तिजातिश्च पटत्वं, ताभ्यां घटत्वपटत्वाभ्यां घटपटौ व्यवह्रियेते। न च पृथिवीत्वासिद्धौ घटत्वपटत्वे सेद्धुं अर्हतः। तथा च 'घटपटवृत्ति(:)'-इति कुतो विशेषणसिद्धिः, परस्पराश्रयप्रसङ्गात्॥

गन्धवत्त्वातिरिक्तं च पृथिवीत्वं न गम्यते।
तदेव चेत्तदिष्टं ते जातिगीर्न मृषा कथम्॥

गन्धवत्त्वव्यङ्ग्यं पृथिवीत्वं, न तु तदेव—इति चेत्, न, नियामकानुपलम्भात्। पृथिवीत्वस्य नित्यत्वात् इतरस्य च अतथात्वात् न ऐक्यं-इति चेत्, न, तत्रापि कारणा(भा)वात्। न हि पृथिवीत्वे गन्धसमवायित्वे च नित्यत्वानित्यत्वविभागे हेतुः उपलभ्यते। गन्धस्य अनित्यत्वात् तद्वत्त्वं अनित्यं-इति चेत्, तर्हि पृथिवीव्यक्तीनामपि घटादीनां अनित्यत्वात् तन्निष्ठं पृथिवीत्वमपि तथा स्यात्। नित्ये पृथिवीभागे पृथिवीत्वं स्थास्यति—इति चेत्, न, तत्र तस्य असंप्रतिपन्नत्वात्। न हि सर्वप्रपञ्चानित्यत्ववादिनां मते पृथिवीभागे संप्रतिपत्तिः अस्ति।

नापि पृथिवीत्वे प्रमाणं; अनुवृत्तप्रत्ययस्य पावकादौ इव गन्धत्वोपाधिनाऽपि सम्भावितत्वात्, तन्मात्रात् जातेः अङ्गीकारे (अ)दृष्टत्वादेरपि स्वीकर्तव्यत्वप्रसङ्गात्॥ द्रव्यत्वं घटपटवृत्तिजातेः भिद्यते, जातित्वात्, गोत्ववत्—इति चेत्, न, द्रव्यत्वस्यैव असंप्रतिपत्तेः आश्रयासिद्ध्यादेः उद्धतत्वात्॥

एतेन अबादिकं अपि प्रतिवक्तव्यम्। पृथिव्यधिकारे च पृथिवीत्वं प्रत्युक्तम्।

परापरविभागेन न ते सामान्यकल्पना।
एकमेव हि सद्वस्तु तत्तद्भावं प्रपद्यते॥ ६४॥

(१) सामान्यशून्याः अत्यन्तव्यावृत्तबुद्धिहेतवः अन्त्याः विशेषाः-इति न युक्तम्—

सामान्यशून्यतासिद्धेरुक्तधीहेतुतागतेः।
विशेषणस्य वैयर्थ्याद्व्यावर्त्यानुपलब्धितः॥

सामान्यशून्यत्वस्य विशेषेषु असिद्धत्वात् अयु(क्तं) आद्यं विशेषणं; द्रव्यादिष्विव तेष्वपि सत्प्रत्ययानुगमावगमे सत्तासामान्यस्य दुरपह्नवत्वात्,

अन्यथा द्रव्यादिष्वपि तदपह्नवप्रसङ्गात् । स्वरूपसत्त्वनिबन्धनात् तेषु सत्त्वानुगतिः—इति चेत्, न; द्रव्यादिष्वपि तथाप्रसक्तौ सत्त्वापलापापा(तात्), तद्बोधकाभावस्य उभयत्र तुल्यत्वात्; लक्षणांशव्याघातभिया विशेषेषु सत्त्वापह्नवे यथोक्तलक्षणसिद्धिः तत्सिद्धौ च लक्षणांशे व्याघातलक्षणस्वरूपहानिनिरासार्थं तेषु सत्त्वापह्नवसिद्धिः इति परस्प(रा)श्रयता ।

अत्यन्तव्यावृत्तबुद्धिहेतुत्वं च असिद्धम् । नित्येषु द्रव्येषु तुल्याकृतिगुणक्रियेषु परमाण्वादिषु प्रत्याधारं व्यावृत्तधीहे(तु)त्वात् विशेषेषु तत्सिद्धिः–इति चेत्, न, तद्व्यावृत्तबुद्धेः अस्माकं असिद्धत्वात् । अस्मद्विशिष्टानां सा अस्ति इति चेत्, न, सन्दिग्धत्वात् । न हि–तेषां परमाण्वादिषु प्रत्येकं अत्यन्तव्यावृत्तबुद्धिः अस्ति–इत्यस्ति प्रमाणम् । तेषां अत्यन्तव्यावृत्त्यभावे सङ्करः स्यात्–इति चेत्, न; नित्यद्रव्याणां असंप्रतिपन्नत्वात्, तस्य च अद्वितीयत्वेन कुतश्चित् व्यावृत्तेः अभावात् । तत्र आत्म(त्व)स्य अनात्म(त्व)स्य वा भेदकत्वे प्रतियोगिनो धर्मिणः च आत्मत्वायोगात् तदद्वितीयत्वलाभात् न विशेषाणां नित्यद्रव्यव्यावर्तकत्वं; अन्त्यविशेषणस्य च व्यावर्त्याभावेन अनर्थकत्वं, स्वरूपोपवर्णनस्य लक्षणानुपयोगित्वात् । नित्यद्रव्यव्यावर्तकत्वविशेषवत्त्वात् च अन्त्यत्वानुपपत्तिः अनवस्था च ।

विशेषेषु विशेषत्वमिष्टं चेदनवस्थितिः ।
विशेषावसितेनैव निर्विशेषात्मवस्तुनि ॥
स्वाश्रयस्य विशेषत्वाद्विशेषत्वं न चेष्यते ।
नित्यद्रव्यविशेषत्वं तेषु पूर्वं हि दूषितम् ॥

न हि स्वाश्रयविशेषकत्वेन विशेषाणां विशेषत्वं, तेषां नित्यद्रव्यव्यावर्तकत्वस्य पुरस्तादेव निरस्तत्वात् ॥

विशेषाणामिवान्येषां स्वतो (व्या)वृत्तिसिद्धितः ।
तदभ्युपगमो व्यर्थस्तत्कार्यस्यान्यतो गतेः ॥

न हि विशेषाः विशेषापेक्षया मिथो व्यावर्तन्ते, किन्तु स्वारस्येन अन्योन्यं व्यावृत्ताः स्वीक्रियन्ते । तथात्मादीनामपि स्वत एव व्यावृत्तबुद्धिसिद्धेः विशेषाभ्युपगमवैयर्थ्यं, विशेषकार्यस्य अन्योन्यं व्यावृत्तेः आत्मादिस्वभाववशादेव सम्भावितत्वात् । परमाण्वादीनां तुल्यजात्यादिभाक्त्वेन अत्यन्ताविलक्षणत्वात् न स्वतोव्यावृत्तिः—इति चेत्, न ।

विशेषेष्वपि तुल्यत्वान्नित्यद्रव्यभिदा न च ।
तदभावे तदानन्त्यं न कुतश्चन निश्चितम् ॥

विशेषेष्वपि तुल्यप्रत्ययवत्त्वेन अवैलक्षण्यस्य तुल्यत्वात् न स्वतो व्यावृत्तिः सिध्येत् । नित्यद्रव्यभेदाभावे च प्रतिनित्यद्रव्यं एकैकशो वृत्तेः आनन्त्यं कुतो भवेत् । आत्मैव हि नित्यद्रव्यं, तत्र च भेदो नास्ति—इत्युक्तम् । तथा च प्रतिनित्यद्रव्यं एकैकशो वृत्तेः वक्तुमशक्यत्वात् नास्ति विशेषेषु आनन्त्यम् ॥

हेत्वभावादनुत्पत्तिमत्त्वं यत्तु निगद्यते ।
तदयुक्तमसिद्धत्वाद्धेतोरुत्पत्तिशालिनः ॥

नित्यद्रव्याणामेव समवायिकारणत्वोपपत्त्या तदभावेन अनुत्पत्तिमत्त्वस्य असिद्धत्वात् उत्पत्तिमन्तो विशेषा निर्धार्यन्ते ॥

भावत्वे सति तद्वत्त्वान्नाशित्वमपि सिध्यति ।
तत्कारणस्य चाधारनाशादेरतिरेकिता ॥

भावत्वे सति उत्पत्तिमत्त्वात् विशेषा नाशवन्तो भवितुमुत्सहन्ते । न च—नाशकारणं आश्रयनाशादि एव—इति नियन्तुं शक्यं, नियामकाभावात् अन्यस्यापि कल्पनीयत्वात्, प्रागुक्तनीत्या तन्नाशस्यावश्यकत्वात्, तत्कारणस्य आश्रयनाशादेः अभावेऽपि कारणान्तरस्य अदृष्टादेः एष्टव्यत्वात् ॥

यत्र प्रमाणं नैवास्ति कुतस्तदुपगम्यते ।
विशेषेषु तवामानं न च ते स्वीक्रियोचिताः ॥

विमतं गुणसामान्यान्यसमवायि, द्रव्यत्वात्, घटवत्—इति चेत्, न, समवायाप्रसिद्धेः अप्रसिद्धविशेषणत्वात्, अन्यशब्दस्य विशेषविषयत्वेऽपि तथाभावात्, दृष्टान्तस्य च साध्यविकलत्वात्, अर्थान्तरविषयत्वे च अर्थान्तरप्रसङ्गात् ।

समवायाप्रसिद्ध्या न विशेषणपरिग्रहः ।
विकल्पानुपपत्तेश्च नान्यशब्दार्थसङ्ग्रहः ॥

तस्मात् न परेष्टा विशेषा नाम निरूपयितुं शक्यन्ते ॥ एतेन—(२) नित्यद्रव्याः( °व्याश्रिताः ? ) स्वरूपस(व?)न्तो विशेषाः—इत्यपि प्रत्युक्तं, आत्मातिरिक्तनित्यद्रव्याभावात्, आत्मनश्च निर्विशेषत्वात्, विशेषेषु च (त)त्स्वरूपसत्तातिरिक्तसत्तायाः साधितत्वात् ॥

अतो न ते विशेषास्ते प्रमाणाविषयत्वतः ।
व्यवहाराञ्च चैते स्युस्तदगोचरता यतः ॥ ६५ ॥

(१) अयुतसिद्धानां परस्परसम्बन्धः समवायः—इति अयुक्तम् ।

अयुतोपेतसिद्धत्वमसिद्धमनिरूपणात् ।
नित्येषु तदसंसिद्धेरनित्येष्वपि तत्त्वतः ॥
तत्सामग्रीक्रमा ज्ञप्तिर्योग्य(रू)पा न लभ्यते ।
तस्मान्नायुतसिद्धत्वं गुणगुण्यादिवस्तुषु ॥

केयं आधार्याधारभूतानां रूपरूपिप्रभृतीनां अयुतसिद्धिः ? सा खलु (१) अपृथगुत्पत्तिः (२) अपृथग् ज्ञप्तिः वा ? न आद्यः, नित्येषु सम्बन्धिषु आत्मत्वादिषु तदसिद्धेः, अनित्येष्वपि मृद्धटादिषु आधारानन्तरभावित्वात् आधेयस्य अपृथगुत्पत्तेः अनुपपत्तेः । न द्वितीयः, ज्ञानसामग्रीक्रमे ज्ञानयौगपद्यायोगात् । अन्या हि रूपादेः ज्ञानसामग्री, घटादेश्च अन्यैव तत्सामग्री । तथा च न तयोः ज्ञानयौगपद्यं उपपद्यते ॥ (३) आधाराधेययोः मिथो विभागायोग्यत्वं अयुतसिद्धत्वं–इति चेत्, न, तथा सति विभागायोगात् आधाराधेयत्वस्यैव असम्भवात् । कुण्डबदरयोः विभागाभावेऽपि दृष्टं आधाराधेयत्वं—इति चेत्, न, विभागभेदशब्दयोः एकार्थतायाः विभागाधिकारे दर्शितत्वात् ।

तयोर्विभागायोग्यत्वमयुतोपेतसिद्धता ।
तवो(योः?) विभागासंसिद्धेस्तद्भागो नैव सिध्यति ॥

किं च अयुतसिद्धत्वम् ? (४) एककालत्वं (५) एकदेशत्वं (६) एकस्वभावत्वं वा ? न आद्यः, द्रव्यगुणादिषु एककालत्वनियमायोगात्, तेषु आधाराधेयभावेन भिन्नकालत्वस्य युक्तत्वात् । न द्वितीयः, गुणादेः द्रव्यदेशत्वेऽपि तस्य तद्देशत्वाभावात् । न हि द्रव्यस्य स्वाश्रयत्वं युज्यते । न तृतीयः, स्वतन्त्रत्वपरतन्त्रत्वादिना भिन्नस्वभावत्वात्, त्रिधा(त्वे)न अयुतसिद्धेः उपलम्भनात् ।

सम्बन्ध(ः) समवायश्चेत् स्वाश्रयत्वं तदाऽऽपतेत् ।
तदन्यश्चेत्तदा दोषो व्याघातः संप्रसज्यते ॥

(२) नित्यः सम्बन्धः समवायः—इत्यपि न ।

सम्बन्धत्वादनित्यत्वं संयोगवदुपेयते ।
न च प्रत्यनुमा युक्ता परस्परसमाश्रयात् ॥

समवायेऽपि सम्बन्धत्वात् अनित्यत्वं (सं)योगवत् अनुमीयते, भावत्वे सति असमवेतत्वात् ॥ नित्यत्वं आत्मवत्—इति चेत्, न, सम्बन्धस्य नित्यत्वे सिद्धे समवायत्वेन समवेतत्वसिद्धिः, तत्सिद्धौ च उक्तानुमानात् तस्य नित्यत्वेन समवायत्वसिद्धिः—इति परस्प(रा)श्रयप्रसङ्गात् ॥

पारिशेष्यान्न ते सिद्धिः समवायस्य युज्यते ।
सर्वानु(ग)तयोग्यत्वसम्बन्धादेव सिद्धितः ॥

न हि परिशेषात् समवायसिद्धि(ः), द्वानां(द्रव्यगुणादीनां?) आधाराधेयभूतानां इह-प्रत्ययस्य योग्यताख्यानुग(त)सम्बन्धादपि सिद्धौ पारिशेष्यासिद्धेः॥

अनुमानान्न तत्सिद्धिः सिद्धसाध्यत्वसम्भवात् ।
विशेषणाप्रसिद्धेश्च तथैवार्थान्तरत्वतः ॥

संयोग(ः) स्वातिरिक्तसम्बन्धात् भिन्नः, मेयत्वात्,घटवत्—इति स(म)वायसिद्धिः—इति चेत्, न, योग्यतासम्बन्धवादिनः सिद्धसाध्यत्वात्, स्वातिरिक्तसम्बन्धस्य च संयोगान्तरव्यक्तित्वसम्भवेन उक्तदोषतादवस्थ्यात्, संयोगमात्रातिरिक्तसम्बन्धविवक्षायां—तस्य स(म)वायत्वे अप्रसिद्धविशेषणत्वात्, तदतिरिक्तत्वे च अर्थान्तरत्वात् ॥

सम्बन्धिभेदेऽनेकत्वं संयोगे गम्यते यथा ।
तथैव समवायेऽपि, तदेकत्वं कुतो मतम् ॥

न च समवायस्य सर्वत्र एकत्वं; सम्बन्धिभेदे संयोगवत् अनेकत्वसाधनसम्भवात्, एकलिङ्गत्वस्य प्रकाराभेदेनापि सम्भावितत्वात्, द्रव्यत्वादिषु सामान्येषु विशेषेषु च त(त्प्र)थनात् व्यावृत्तप्रत्ययाभावस्य असिद्धत्वात्, अन्यथा संयोगस्यापि एकत्वप्रसङ्गात्, सम्बन्धिभेदात् भेदप्रत्ययस्य समवायेऽपि समानत्वात् ।

तद्वृत्तेर्न स्वभावत्वमत्यापत्तिप्रसङ्गतः ।
अतीन्द्रियत्वं नैवास्य योग्यतासङ्गतेर्भवेत् ॥

या हि समवायस्य समवायिनोः वृत्तिः इष्टा तस्याः स्वभावत्वे सम्बन्धिलाभे च स्वभावसम्बन्धसम्भवे समवायकल्पनानर्थक्यम् । न च अस्य इन्द्रियसम्बन्धाभावात् अतीन्द्रियत्वं, योग्यतालक्षणसम्बन्धसम्भवात्, तस्य च कार्यकल्प्यस्य दुरपह्नवत्वात्, कल्पनालाघवाच्च तस्यैव अभ्युपेयत्वात्, विशेषणविशेष्यत्वसम्बन्धस्य अतिप्रसङ्गित्वात् ।

तदेवं समवायस्य पराङ्गीकारमात्रतः ।
अप्रामाणिकता सिद्धा न लोकादपि तद्गतिः ॥

तस्मात् (न)-भावात्मानः पदार्थाः षड् एव इति मतं—इति स्थितम् ॥६३॥

यत् पुनः—अभावत्वं चतुर्षु व्यवस्थितम्—इति—

तदयुक्तं, चतुष्टुस्य भावत्वे तदवृत्तितः ।
अभावत्वेऽपि तद्वृत्तिष्ववृत्त्या (तद्वृत्तिः स्वाश्रया?)द्वेर्न सेत्स्यति ॥

यदिदं चतुष्टुं अभावनिविष्टं तस्य भावत्वे—भावस्य अभावाश्रितत्वानुपपत्तेः-अभावेषु प्रागभावादिषु चतुष्टुवृत्तेः अयोगात्, न तेषु सङ्ख्यानियमः सङ्गच्छेत् । न च अद्रव्येषु सङ्ख्याविशेषो युक्तः । न च असतां तेषां आश्रयत्वं आश्रयितुं शक्यते, तस्यैव असत्त्वस्य असत्त्वाप्रसङ्गात् ॥ न च अभावत्वे-चतुष्टुस्य तेषु वृत्तिः युक्ता, स्वाश्रयत्वापातात् । न च-अभावान्तरं चतुष्टुं अभावेषु निविष्टं-इति कुतः स्वाश्रयत्वं-इति वाच्यं, अभावान्तरस्य अभावत्वे प्रागुक्तस्वाश्रयत्वानतिवृत्तेः । अभावात् अन्या(न्योऽ?)भावः अभावान्तरं—इति चेत्, न, अभावस्य अभावत्वेन-भावत्वेन (अ)भावात्-अन्यत्वस्य वक्तुं अशक्यत्वात् । यदि अभावात् अभावत्वेन अभावो भिद्यते, तदा न अभावत्वं प्रतियोगिनः सम्भवेत् । न हि घटत्वेन पटात् भि(न्नं) घटत्वं अस्ति । यदि पुनः-भावात् अन्यत्वस्य वक्तुं अशक्यत्वात् यदि अभावात् अभावत्वेन अभावो भिद्यते-तदा न अभावत्वं प्रतियोगिनः सम्भवेत् । न हि घटत्वेन पटात् भिद्यमाने पटस्य घटत्वमस्ति । यदि पुनः भावत्वेन अभावात् अभावो भिद्येत, तदा धर्मिणो भावत्वं सिध्येत्, भावत्वेन तस्य अभावात् भिद्यमानत्वात् । भावत्वे च, अभावान्त(र)स्य भावस्य अभावनिष्ठत्वानुपपत्तिः इत्युक्तं आवर्तते । किञ्च अभाव(त्वे)न इदं स्वयं-अभावः चेत्, असत्त्वात् न परत्र तिष्ठेत्; भावः चेत्, न तत्र स्थातुं अर्हति, भावस्य अभावनिष्ठत्वानभ्युपगमात् ।

एतेन-प्रागभावः प्रध्वंसाभावः अन्योन्याभावः अत्यन्ता(भा)वः-इति अभावविभागव(त्वं?) अपोढं, तद्भेदस्य भावत्वेन अभावत्वेन वा अभिधातुं अशक्यत्वाभिधानात् ॥

कश्च प्रागभावः ? अनादिः अन्तवान्-इति चेत्, किं तस्य अनादित्वम् ? प्रागभावप्रतियोगित्वराहित्यं-इति चेत्, न, प्रागभावे लिलक्षयिषिते तन्निरूप-

णे(न) तत्सिद्धौ तत्सिद्धिः–इति स्वाश्रयत्वप्रसङ्गात् । अन्तवत्त्वं च प्रध्वंसप्रतियोगित्वम् । तच्च निरसिष्यमाणत्वादेव तस्य अयुक्तम् । न च अनादित्वादेव अ(न्त)वत्त्वं आत्मवत् उपपद्यते । न खलु अनादिः अन्तवान् उपलभ्यते । न च–पार्थिवपरमाणुगतश्यामत्वादेरपि दृष्टं अन्तवत्त्वं–इति वाच्यं, परमाणोः तदीयश्यामतादेः तदनादित्वस्य च अप्रामाणिकत्वात् । न च अन्तवतोऽनादित्वं तथाविधे घटे तदनुपलम्भाव(°भात् न?)स्यात् अन्तवत्त्वम् । अन्तवतोऽपि तस्य अविरुद्धं अनादित्वं—इति चेत्, किं तस्य अभावत्वं ? प्रागभावत्वं—इति चेत्, न, स्वाश्रयत्वस्य उक्तत्वात् । अभावान्तरत्वं तु व्याघातात् असङ्गतम् । न च भावान्तरं भावत्वेन (अ)भावत्वेन वा शक्यं निरूपयितुं—इत्युक्तम् । घटादेश्च अ(न)न्तरकार्यस्य पूर्वावस्थं मृदादि एव प्रागभावत्वेन अभिमतं–इति कुतः तस्य अनादित्वं अभाव(त्वं) वा सम्भवति । न च—एवं अनादौ कारणे प्रागभावपरम्परापर्यवसानात् तदनादित्वं सुघटं—इति युक्तं, कारणस्य अनादितया तदात्मकस्य प्रागभावस्य अनादित्वेऽपि तदभावत्वस्य वक्तुं अयुक्तत्वात् ।

प्रागभावे यथोक्तेन स्वाश्रयत्वादिना गते ।
प्रध्वंसोऽपि समानत्वात्तेनैव प्रतिषिध्यते ॥

स खलु आदिमान् अनन्तोऽभावः अभिलप्यते । तदनन्तत्वं च प्रध्वंसाप्रतियोगित्वम् । न तु अन्यादृशं आनन्त्यं तत्र युक्तम् । तथा प्रध्वंसेनैव प्रध्वंसं निरूपयतः श्लाघनीयप्रज्ञस्य कुतः स्वाश्रयत्वं न अवतरति । न च आदिमत्त्वं अनन्तत्वं च मिथो विरुद्धं एकत्र सिध्यति । द्वयं एकत्र अभावे भवति अविरुद्धं—इति चेत्, न, प्रध्वंसत्वेन तदन्यत्वेन वा अभावत्वस्य अत्र वक्तुं अयोग्यत्वात् । न हि प्रध्वंसत्वेन अत्र अभाव(त्वं) अभिधीयते, प्रागुदीरितात्माश्रयत्वस्य अनतिक्रमणीयत्वात् । नापि तदन्यत्वेन अभावत्वं इह उच्येत, प्रध्वंसात् अन्योऽभावः प्रध्वंसः—इति व्याघातात् । प्राचीनस्य च घटादेः भावस्य पराचीनं कपालादि एव विनाशि भावरूपं प्रध्वंसत्वेन अभिप्रेतं—इति कुतः तस्य अनन्तत्वं अभावत्वं वा प्रतिज्ञायेत । प्रध्वंसपरंपरायाः मूलकारणे अपर्यवसानात् तदानन्त्यात् ध्वंसानन्तता इति चेत्, तथापि न तस्य अभावत्वं, मूलकारणस्य भावत्वाभ्युपगमात् ॥

अनाद्यनन्तोऽभावश्चेदन्योन्याभावभाषया ।
अभिधेयो न तद्युक्तमत्यन्ताभावसङ्करात् ॥

अन्योन्याभावो नाम (१) (अ)नादिः अनन्तोऽभावः—इति चेत्–मैवं, अत्यन्ताभावे च यथोक्तस्य लक्षणस्य सत्त्वात् अतिव्याप्तिप्रसङ्गात् । न च–प्रतियोगिनिष्ठत्वतदनिष्ठत्वाभ्यां उक्तलक्षणयोरपि तयोः वैधर्म्यसिद्धिः–इति श्रद्धेयं; प्रतियोगिनिष्ठत्वस्य भावत्वे–अत्यन्ताभावनिष्ठत्वानाश्रयणात्, अभावत्वेऽपि–न अभावनिष्ठत्वं सिध्यति इति साधितम् । (प्र)तियोग्यनिष्ठत्वमपि प्रतियोगिनिष्ठात्यन्ताभावात् अन्यत्वं चेत् अन्योन्याभावस्य अभिमतं, कथं तर्हि-प्रतियोगिनिष्ठात्यन्ताभावान्योन्याभाववत्त्वेन अन्यो(न्या)भावोक्तौ न आत्माश्रयत्वम् । प्रतियोग्यनिष्ठत्वं नाम प्रतियोगिनिष्ठात्यन्ताभाववत्त्वं इति चेत्, न, तस्यैव अद्यापि असिद्धत्वात् । (२) प्रतियोगिनिष्ठो यथोक्तोऽभावः तथा–इति चेत्, न, प्रतियोगिनिष्ठत्वस्य अभावे प्रत्युक्तत्वात्, अनाद्यनन्तत्वेऽभावत्वानुपपत्तेः आदर्शितत्वात् । अत्यन्ताभावश्च निःस्वभावः चेत्, न सप्रतियोगित्वं शशविषाणादिवत् युक्तम् । सस्वभावः चेत्, न प्रागभावादिवैधर्म्यम् । अनाद्यनन्तत्वं ततो वैधर्म्यं—इति चेत्, न, तस्य प्रागेव निरस्तत्वात् ।

तस्य चेन्निःस्वभावत्वं प्रतियोगी न लभ्यते ।<br>
तथाविधे नृशृङ्गादौ तदभावोपलम्भनात् ॥<br>
सस्वभावत्वमिष्टं चेदितरस्मात्कुतो भिदा ।<br>
अनाद्यनन्तता तस्य पुरस्तादवधीरिता ॥

यत्तु (३) तादात्म्यप्रतियोगिकाभावः अन्योन्याभावः–इति तत् अयुक्तम् ।

प्रमितत्वे प्रमाभङ्गान्निषेधस्तस्य नेष्यते ।<br>
अन्यथात्वे तदप्राप्तेर्निषेद्धुं नैव शक्यते ॥

तादात्म्यप्रतियोगिकः चेत् अन्योन्याभावोऽभिप्रेतः, तत् तर्हि तादात्म्यं प्रमितं अप्रमितं वा ? प्रमितं चेत्, न प्रतिषेद्धुं शक्यं, प्रमितिविरोधात् । न च—घटपटयोः तादात्म्यं प्रमितं–अन्यत्र प्रतिषेध्यं, अप्राप्तेः अन्यत्र प्रतिषेधायोगात् । घटपटयोश्च तादात्म्यस्य प्रमितत्वात् एव अप्रतिषेधे न तयोः साङ्कर्यं वार्येत; तथा च उदकाहरणार्थी पटमपि घटमिव आददीत, शीतापनयार्थी च घटमपि पटमिव उपाददीत । एवं तत्र प्रमितस्य तादात्म्यस्य प्रमितिविरोधादेव अप्रतिषेधे प्रवृत्तिसाङ्कर्यं दुर्वारं आपद्येत ॥ यदि पुनः अन्योन्याभावप्रतियोगिभूतं तादात्म्यं अप्रमितं (प्रतिहीयेत?) तर्हि प्राप्त्यभावात् न तत्प्रतिषेधो युज्येत । अप्राप्तप्रतिषेधे च निवारकाभावात् निरङ्कुशो निषेधः स्यात् । घटपटयोः तादा-

त्म्यं भ्रान्तिप्राप्तं-अयं अयं न भवति-इति निषेध्यं-इति चेत्, न, भ्रान्तिपूर्वकत्वात् घटपटतादात्म्यस्य क्वापि प्रामाणिकत्वप्रसङ्गात् ॥ एतेन (४) अन्योन्यप्रतियोगिकः अभावः अन्योन्याभावः—इति प्रत्यूढं, अन्योन्यशब्दस्य अतादात्म्यविषयत्वे प्रागुक्तदोषानतिक्रमणात्, घटपटविषयत्वे च तत्स्वरूपनिषेधस्य असिद्धत्वात्। घटे पटत्वं पटे च घटत्वं-घटः पटो नेति निषेध्यं-इति चेत्, न, घटे पटत्वस्य पटे च घटत्वस्य प्रसङ्गाभावादेव प्रतिषेधायोगात्। न हि घटादौ पटत्वादि प्रसक्तं अस्ति; तन्निषेधे च तादात्म्यनिषेधातिरिक्तसंसर्गनिषेधाभ्युपगमः स्यात्। तथा च सर्वस्य संसर्गनिषेधत्वात् अवान्तरविभागकथा वृथा प्रसज्येत ॥ न च-(१) अप्रामाणिकप्रतियोगिकोऽभावः अत्यन्ताभावः, अभावान्तरं तु नैवं-इति वाच्यं, अन्योन्याभावादिषु अपि तुल्यत्वात्, तत्प्रतियोगिनः तादात्म्यस्य प्रामाणिकत्वानुपपत्तेः उक्तत्वात्। प्रागभावप्रध्वंसाभावयोश्च प्रतियोगिकार्यम् अप्रामाणिकं-इति वक्ष्यते।

अभावेषु भिदा तस्मान्न युक्तोक्तेन वर्त्मना।
भावाभावविभागेन तेनाविद्या विजृम्भते ॥ ६७ ॥

किञ्च— प्रागभावनिवृत्तिर्या सा भावाद्यदि भिद्यते।
तद्विरोधा(विरोधा)भ्यां न निवृत्तिर्न चोदयः ॥

या हि प्रागभावस्य कार्यात् प्रागवस्थायाः निवृत्तिः इष्टा, सा किं कार्यात् भिद्यते किं वा न इति वक्तव्यम्। प्रथमेऽपि, प्रागभावे निवृत्ते कार्यं उत्पद्यते, उत्पन्ने वा कार्ये प्रागभावो निवर्तते,कार्यस्योत्पत्तिरेव वा प्रागभावस्य निवृत्तिः? न तावत्-प्रागभावे निवृत्ते कार्यस्य उत्पत्तिः—इति युक्तं, कार्योत्पत्तेः अर्वागेव प्रागभावनिवर्तकाभावात् तन्निवृत्तेः अनुपपत्तेः। कार्यसामग्री तन्निवृत्तिहेतुः इति चेत्, न, तस्याः तदुत्पादने व्यापृतत्वात्। नान्तरीयकत्वेन तन्निवर्तकत्वं इति चेत, न तर्हि प्रागभावे निवृत्तत्वमिति भावत्वस्य उत्पत्तिः, तदुत्पत्तिनान्तरीयकतया तन्निवृत्तेः इष्टत्वात् ॥ नापि कार्ये जाते प्रागभावस्य निवृत्तिः, तदविरोधेन कार्यस्य जातत्वे-प्रागभावनिवृत्तिकारणाभावात् तन्निवृत्तेः अयोगात्; विरोधे च सति-विरोधिनि प्रागभावे कार्यमेव नोत्पद्येत ॥ न च कार्यस्य उत्पत्तिरेव तत्प्रागभावनिवृत्तिः। तद्धि न सत् उत्पद्यते, सत्त्वादेव आत्मवत् कारकनिरपेक्षत्वात्। नण्यतत् (नाप्यसत् ?) उत्पद्यते, असत्त्वादेव नरविषाणवत् तन्निरपेक्षत्वस्य तुल्यत्वात्। न च—अन्यस्य निवृत्तिः अन्यस्य

उत्पत्तिः—इति युज्यते, घटादिनिवृत्तेः पटाद्युत्पत्तित्वादर्शनात् । विरोधिनिवृत्तिः विरोध्युत्पत्तिः-इति चेत्, न, नकुलादिनिवृत्तेः सर्पाद्युत्पत्तित्वानुपलम्भात् । अभावनिवृत्तिः भावोत्पत्तिः—इति चेत्, न, भावस्य सतः असतश्च उत्पत्तेः अनुपपत्तेः उक्तत्वात् । न च प्रागभावनिवृत्तिः घटादिभावात् न अर्थान्तरं, प्रागभावध्वंसस्य घटादिभावत्वे घटादिध्वंसस्यापि कपालादिभावत्वप्रसङ्गात् । तथा च प्रध्वंसस्यापि प्रागभावस्य इव नाशित्वं आपद्यते॥ किञ्च प्रागभावस्य नाशित्वं किं ध्वंसतो वा सत्त्वाभावात् ? तद्ध्वंसस्य तस्मिन् उभयथात्वाभावेऽपि कपालादौ मृदादौ वा धर्मत्वं अविरुद्धं—इति चेत्, तर्हि प्रागभावप्रध्वंसस्यापि प्रागभावे द्विधात्वायोगेऽपि घटादौ वा मृदादौ वा धर्मत्वं इति न इष्यते । प्रागभावप्रतियोगिकनाशस्य घटादिधर्मत्वे प्रागभावस्यापि विशेषणतया घटादिधर्मत्वात् यावन्नाशं अवस्थानं स्यात्—इति चेत्, तर्हि घटादिप्रतियोगिकनाशस्यापि कपालादौ मृदादौ वा धर्मत्वे विशेषणतया घटादेरपि तद्धर्मत्वात् यावन्नाशं अन(व?)स्थितिः—इति (न) कश्चित् विशेषः ।

किञ्च—जाताजातविभागेन जन्म नैवोपपद्यते ।
नष्टानष्टव्यवस्थातो नाशोऽपि न निरूप्यते ॥

न हि-प्रागभावे प्रागुक्तन्यायेन प्रतिपादयितुं अशक्यनीये(°क्ये?), प्रागभावतो जन्म-इति सम्भवति । प्रध्वंसे च पूर्वोक्तन्यायेन अयुक्ते, कुतो नाशो नाम विकारो निरूपणपदवीं उपारोहति । न च जातं जन्मना युज्यते, तस्य जन्मवैफल्यात् । नापि अजातं तेन सम्बध्यते, व्याघातात् । जन्मयोग्यस्य तत्सम्बन्धः स्यात्—इति चेत्, न, तस्य कार्यकल्पत्वात् जन्मव्यतिरेकेण अनिर्धारणात् इतरेतराश्रयतापातात् । न च नाशो नष्टस्य इष्टः, विफलत्वात् । नापि व्याघातात् अ(न)ष्टस्य असौ एष्टुं शक्यते । तद्योग्यस्य तदाश्रयणं तु प्रागुक्तन्यायेन प्रत्युक्तम् ॥

किञ्च-निहन्ति (स्वाश्रयं नापि) नाशः स्वात्मपराभवात् ।
न हि (क्रिया) क्रियावन्तं बाधमानाऽधिगम्यते ॥

नाशो हि स्वाश्रयं न निवर्तयति, क्रियात्वात्, गमिक्रियावत्,-अन्यथात्वे रूपहानिप्रसङ्गात् । न हि क्रिया काचित् आश्रयमन्तरेण स्वीक्रियते ॥

द्वयोरसम्भवे मध्यपातिन्योऽविक्रियां ( क्रियाः । ? )
( तथैव ? ) प्रतिपद्येरन्नक्रियं वस्त्वतो मतम् ॥

जन्मविनाशयोः आद्यन्तविकारयोः उदीरितया रीत्या निरूपयितुं अशक्ययोः अन्तर्वर्तिनां विकारान्तराणामपि तथैव स्वरूपत्वेन धर्मत्वेन वा निरूपणायोगात्, निर्विकारं वस्तु कूटस्थं आस्थेयम्। न हि विपरिणामादयो विकाराः वस्तुनः स्वरूपत्वेन निरूप्यन्ते; वस्तुपरिशेषे तेषां अभावात्, वस्तुनो निर्विकारत्वस्य अस्मदभीष्टस्य अतिस्पष्टत्वात्; तत्परिशेषे च तेषां वस्तुसापेक्षत्वात्, तदभावे भावायोगात् न किञ्चिदपि स्यात्; धर्मो च धर्मधर्मिभावस्य दुर्भणत्वात् तद्धीनं अखण्डैकरसंवल्लेव(°रसं च नैव ?)सिध्येत्॥

अद्वितीयं तदेष्टव्यमन्योन्याभावभङ्गतः।
अत्यन्ताभावभङ्गाच्च न क्वचित्तन्न विद्यते॥

अन्योन्याभावाभावे (वस्तुनः अद्वितीयत्वं?)। वस्तुनोऽसत्त्वं (च) अत्यन्ताभावाभावे (न) सम्भवति॥

किञ्च—प्रमाणमपि नाभावे नाध्यक्षं तदसम्भवात्।
नानुमा सिद्धसाध्यत्वान्न चान्यदनिरूपणात्॥

न तावत्—चतुर्विधेऽपि यथोक्ते अभावे किञ्चित् प्रमाणं उपलभ्यते। भविष्यति घटो-नष्टो घटो-नायमयं-नायमिह—इति प्रत्यक्षं इह प्रमाणं—इति चेत्, न; सन्निकर्षाभावात्, न हि इन्द्रियस्य प्रागभावादिना सन्निकर्षोऽस्ति, रूपादेः तद्गतश्च अन्यत्वात्; संयुक्तविशेषणत्वादेः अध्यक्षाङ्गत्वे-सम्प्रतिपत्त्यभावात्, तथाविधगुरुत्वादेः अध्यक्षत्वात्; पर्वतवर्तिनो वह्नेः ईदृशस्यापि मानान्तरगम्यत्वात्। निर्घटं भूतलं-इति व्यवहारो विशेषणज्ञानपूर्वकः, विशिष्टव्यवहारत्वात्, सघटं भूतलमिति व्यवहारवत्—इति चेत्, मैवं, आध्यासिकघटाभावप्रतीतिपूर्वकत्वेन सिद्धसाधनत्वात्। न च-वस्तुभूतविशेषणज्ञानपूर्वकत्वं साध्यं—इति वाच्यं, दृष्टान्तेऽपि तथाविधसाध्यासम्प्रतिपत्त्या तस्य साध्यविकलत्वात्। न च योग्यानुपलब्धिः इह प्रमाणं, विशिष्टानुपलब्धिबोध्यत्वेन अनवस्थानात्।

नित्यानुभवसंसिद्धो व्यवहाराय कल्पते।
अभावो भाव(व)त्तस्य वस्तुत्वं केन गम्यते॥

तदेवं—भावाभावविभागभागि सकलमपि द्वैतं अद्वितीये भावाभावविभागविनिर्मुक्ते निर्विकारचैतन्यैकताने परिपूर्णे प्रत्यगात्मनि अनाद्यनिर्वाच्याविद्यया समारोपितं—इति सिद्धम्॥ ६८॥

अथ इदानीं इदं समारोपितं (१) सत् वा स्यात् (२) असत् वा (३) सदसत् वा (४) सदसद्विलक्षणं वा इति अन्तिमपक्षनिर्धारणार्थं परीक्ष्यते॥

(१) तत्र न तावत्–आरोपितं सत्—इति सम्भवति ।
अधिष्ठाने निषिद्धत्वान्नाध्यस्तं सदुपेयते ।
नान्यत्र मानशून्यत्वान्नासत्त्वमपि बाधनात् ॥

अध्यस्तस्य हि सत्त्वं अधिष्ठाने वा ततोऽन्यत्र वा वक्तव्यम्। न तावत् प्रतिपन्नोपाधौ अधिष्ठाने तस्य सत्त्वं युक्तं, "नेह (ना)नास्ति"—इति श्रौतनिषेधधीविरोधात् । न खलु–अधिष्ठाननिष्ठात्यन्ताभावः तन्निष्ठं सत्त्वं च एकस्य–सम्भाव्यते । न च अधिष्ठानात् अन्यत्र आरोपितस्य सत्त्वं, प्रमाणाभावात् । न हि भ्रान्त्यनुभवात् आरोपितस्य अन्यत्र सत्त्वं ज्ञेयं, तस्य अधिष्ठाननिष्ठारोपितगोचरस्य तत्रैव तदीयसत्तावेदकत्वात् । नापि निषेधानुभवः तस्य अन्यत्र सत्तां गोचरयति, तस्य अत्रैव तदावां (वदतो?) बाधि(त)त्वात्, अन्यत्र सत्त्वासत्त्वयोः उदासीनत्वात् । न च—इह निषिद्धं अर्थात् अन्यत्र भविष्यति–इति वाच्यं, अध्यारोपितस्य अज्ञाताधिष्ठानकार्यस्य तदतिरिक्तस्वरूपाभावात् तत्र निषिद्धस्य अन्यत्र सत्त्वायोगात्—

"नान्यत्र कारणात्कार्यं, न चेत्तत्र, क्व तद्भवेत्"–इति न्यायात् ॥

पक्षान्तरेषु चारोप्यं रूप्यादि न सदिष्यते ।
आरोपस्यानभीष्टत्वादारोप्यस्यासदात्मनः ॥

न तावत्–अख्यातौ—आरोपितस्य क्वचिदपि सत्त्वं, आरोपस्यैव असम्मतत्वात् । अविविक्तानेकख्यातिः अख्यातिः—इति अङ्गीकारात् आरोपः अस्ति—इति चेत्, न, विवेकाभावत्वेन तदन्यत्वेन तद्विरुद्धत्वेन वा अविवेकस्य तन्मते दुर्वचत्वात् ॥ न च–अन्यथाख्यातौ–आरोपितस्य क्वचित् अस्ति सत्त्वं, अधिष्ठानारोप्यसंसर्गस्य असतो भानाभ्युपगमात् ॥ असत्ख्यातौ अपि–बहिष्ठस्य असतो भानं अभीष्टम् । अतो मतान्तरेषु न क्वचित् आरोपणीयं सत् भवितुं अलम् ॥

(२) प्रतीतिप्रहतेर्नेदमसदभ्युपगम्यते ।
बाधधीरन्यथाऽसिद्धा न सत्त्वमवगाहते ॥

न च तस्य असत्त्वं, यत्र प्रतीयते तत्रैव असत्त्वस्य प्रतीतिबाधितत्वात्, ततोऽन्यत्र असत्त्वस्य इष्टत्वात् । न च—असति अपि प्रतीतिमात्रं अविरुद्धं–इति वाच्यं, आरोपिते तद्विशेषस्य सत्त्वात् । न खलु अपरोक्षप्रतीतिसिद्धं अध्यस्तं अत्यन्तासत् भवितुं उत्सहते, अपरोक्षप्रतीतिविरोधात् । न च बाधावबोधात् तदसत्त्वसिद्धिः, तस्य अधिष्ठानाज्ञाननिवर्तकस्य नान्तरीयकतया त-

त्कार्यनिवृत्तिहेतोः आरोपणीयात्यन्तासत्त्वाबाधकत्वात् । न च—अविवेकनिवृत्तिः बाधः, अविवेकस्य अनन्तरमेव निरस्तत्वात् । न च—तादात्म्यनिवृत्तिः बाधः, तथा सति अनन्तरं तत्रैव विविक्तयोः द्वयोः अवभासप्रसङ्गात् । न च—बहिष्ठं बाध्यं, न इदं किन्तु इह—(इ)ति प्रतीत्यापातात् ॥

(३) एकस्योभयरूपत्वं विरोधान्नोपगम्यते ।
न हि (सत्त्वम)सत्त्वं च धर्मिण्येकत्र युज्यते ॥

एकस्य आरोपणीयस्य सत्त्वं असत्त्वं च इति उभयरूपत्वं न उपपद्यते, विरुद्धयोः सत्त्वासत्त्वयोः एकस्मिन् धर्मिणि अभ्युपगमासम्भवात् ॥

पर्यायेणाविरोधश्चेन्न सर्वत्रोपपत्तितः ।
विशेषणस्य वैयर्थ्यान्न च पर्यायसम्भवः ॥

एकस्मिन् अपि क्रमेण सत्त्वासत्त्वे स्यातां—इति चेत्, न, सर्वस्मिन्नपि क्रमेण सत्त्वासत्त्वयोः उपपन्नत्वात्–आरोपणीयं सदसदात्मकं इति विशेष(ण)स्य अनर्थकत्वात् । प्रदर्शनमात्रं एतत्–इति चेत्, न, पूर्वं सत्त्वं पश्चादसत्त्वं–इति क्वचिदपि क्रमस्य अयुक्तत्वात् । न हि सत्त्वे स्थिते पुनः असत्त्वं, विरोधस्य दुर्वारत्वात् । नापि निवृत्ते सवृत्ते (असत्त्वे ?) सत्त्वे स्थिते पुनरसत्त्वं, विरोधस्य दुर्वारत्वात् । नापि निवृत्ते सत्त्वे पश्चात् असत्त्वं, सत्त्वे स्थिते च तन्निवृत्तेरेव अयोगात् ॥

किञ्च सत्त्वं सतोऽयुक्तमसतो न विरोधतः ।
असत्त्वं च सतोऽयुक्तमसतो न वृथात्वतः ॥

न हि सतः सत्त्वं युक्तं, वैयर्थ्यात् । न असतः तत् युज्यते, विरोधात् । न च सतः असत्त्वं, सत्त्वे स्थिते च तदयोगस्य उक्तत्वात् । नापि असतः असत्त्वं, वैयर्थ्यस्य तुल्यत्वात् ॥

आरोप्यस्योभयत्वे च नारोपो न विपर्ययः ।
अंशमात्रग्रहाद्भ्रान्तौ बाधोऽपि भ्रान्तिरिष्यताम् ॥

आरोप्यस्य रूप्यादेः सदसदात्मकत्वे न भ्रान्तिबाधौ स्यातां, द्वयोरपि यथार्थत्वात् । * * * न सदसदात्मकमारोपणीयम् ॥

पारिशेष्यादनिर्वाच्यमारोप्यमुपगम्यताम् ।
सत्त्वादीनां प्रकाराणां प्रागुक्तन्यायबाधनात् ॥

किं पुनः अनिर्वाच्यत्वं नाम ? (१) निर्वचनाभावः चेत्, गुरवः उपास्यन्तां येभ्यो निरुक्तयः शिक्ष्यन्ते; (२) निर्वचनायोग्यत्वं चेत्, न, तेनतेनात्मना तस्य निर्वचनदर्शनात्–इति चेत्, मैवम् ।

येनयेन प्रकारेण परो निर्वक्तुमिच्छति ।
तेनतेनात्मनाऽयोगस्तदनिर्वाच्यता मता ॥

येनयेन सत्त्वादिना परो निरुक्त्यभिमानं धत्ते (ते)नतेन प्रागुक्तन्यायवशात् निर्वक्तुं अशक्यत्वमेव—अ(नि)र्वाच्यत्वं उच्यते। तथा च (३) सत्त्वानधिकरणत्वे सति असत्त्वानधिकरणत्वे सति सदसत्त्वानधिकरणं अनिर्वाच्यत्वं—इति निर्वचनं पर्यवस्यति ॥

यथा समुच्चयोऽदृष्टो नित्यानित्यनिषेधयोः ।
तथा समुच्चयोऽयुक्तः सत्त्वासत्त्वनिषेधयोः ॥

न हि नित्यत्वानित्यत्वयोः एकत्र निषेधसमुच्चयो दृश्यते, तथा सत्त्वासत्त्वयोरपि न एकत्र निषेधसमुच्चयो युज्यते, द्विधाऽपि च निषेधेऽपि विरोधस्य तुल्यत्वात्—इति चेत्, मैवम् ।

परस्परविरोधेऽपि भावाभावनिषेधयोः ।
समुच्चयस्य दृष्टत्वादिष्टोऽत्रापि तथा न किम् ॥

दृश्यते हि भावान्योन्याभावयोः अन्योन्याभावः, अन्योन्याभावश्च नास्ति—इत्यत्र विरुद्धयोरेव निषेधयोः एकत्र समुच्चयः । न हि भावान्योन्याभावः सम्भवति, तयोः मिथो विरुद्धत्वेन तादात्म्यायोग्यत्वात् । नापि तयोः अन्योन्याभावो युक्तः, अन्योन्याभावेऽन्योन्याभावासम्भवात् । तथा प्रकृतेऽपि सत्त्वासत्त्ववैलक्षण्यसमुच्चयो भविष्यति ॥

तात्त्विकं यदि वैजात्यं धर्मी तर्हि तथा भवेत् ।
अतात्त्विकत्वे सत्त्वादेस्तात्त्विकत्वं प्रसज्यते ॥

यदिदं (स)दसद्वैलक्षण्यं रौप्यादौ विवक्षितं तत् तात्त्विकं अतात्त्विकं वा ? प्रथमे, धर्मिणोऽपि रूप्यादेः तात्त्विकत्वप्रसङ्गः । न हि धर्मः तात्त्विको धर्मी (अतात्त्विक इ)ति सम्भवति । द्वितीये च, प्रतियोगिनः सत्त्वादेः तात्त्विकत्वं स्यात्—इति चेत्, मैवम् ।

सत्त्वादिदुर्निरूपत्वमिद्ध्यर्थमिदमुच्यते ।
वैलक्षण्यं, न तस्यात्र तात्त्विकत्वं विवक्ष्यते ॥

रौप्यादौ हि सदसद्विलक्षणत्वं प्रति(योगि)नः सत्त्वादेः रूप्यादिनिष्ठत्वेन निरूपयितुं अशक्यत्वं आदर्शयितुं उपन्यस्यते; न तु सत्त्वादिवैलक्ष्यण्यस्य तात्त्विकत्वं अभिप्रेयते, अतात्त्विकस्य तात्त्विकधर्मवत्त्वासम्भवात् ।

कार्यत्वात्कारणाकाङ्क्षं तदपीदं घटादिवत् ।
तस्यानिर्वचनीयत्वात् कारणं स्यात्तथाविधम् ॥

तद्धि इदं अनिर्वाच्यत्वेन प्रदर्शितं रूप्यादि कार्यत्वात् घटादिवत् कारणं आकाङ्क्षति; न च तस्य अनिमित्तमात्रात् उपपत्तिः, अभावेतरकार्यस्य उपादानसापेक्षत्वनियमात्। न च अवस्तुनो वस्तु (उ)पादानं उपपद्यते। तस्मात् रूप्यादिकार्यस्य अनिर्वाच्यत्वात् तदुपादान(म)पि तादृगेव अधिष्ठानाज्ञानं उपादेयम्।

तथैवात्म(नि) जातस्य जगतो जडा(डता?)दिना।
अनिर्वक्तव्यता ज्ञेया तेनाज्ञाननिदानता॥

रूप्यादिवत् आरोप्यत्वाविशेषस्यापि जगतो दृश्यत्वजडत्वादिना श्रुत्या च "नेह नानाऽस्ति" इत्याद्यया मिथ्यात्वसिद्धेः अनाद्यनिर्वाच्यात्माज्ञानविजृम्भितत्वाभ्युपगमात्, आत्माज्ञानस्य सकार्यस्य ज्ञानात्ममात्रत्वेन निवृत्त्या, निःशेषानर्थनिवृत्तिः निरतिशयानन्दाविर्भावश्च पुरुषार्थः सिध्यति—इति सिद्धम्॥ ६९॥

कस्याज्ञानं ? न सर्वज्ञे परे तदुपपद्यते।
जीवानां तदभिन्नत्वान्नैव तेषु घटिष्यते॥

न तावत् इदं अज्ञानं ब्रह्मणो युक्तम्, तस्य सर्वज्ञस्य तदनुपपत्तेः; नापि जीवानां अज्ञानं भवितुं अर्हति, तेषां परमार्थतो ब्रह्माभिन्नत्वात्, कल्पितभेदानां च रजतभुजङ्गादिवत् कल्पितत्वेन अज्ञानात्मकत्वात् तदाश्रयत्वायोगात्; अतो क(स्य अ?)ज्ञाननिवृत्त्या पुरुषार्थपरिसमाप्तिः—इति चेत्, मैवम्।

अस्वातन्त्र्यादसिद्धेश्च तेन तस्योपपादनात्।
तस्मिन्नेव तदज्ञानं परात्मनि चिदात्मनि॥

न ता(व)त् अज्ञानमेव नास्ति, प्रसिद्धत्वात्। न च तस्य स्वतन्त्रत्वं, अज्ञानत्वहानात्॥

नापि ब्रह्मणः अर्थान्तरं तदधिकरणं, तस्य अज्ञानतत्कार्यानतिरेकात् अज्ञानाधारत्वायोगात्।

न च—ब्रह्मण्यपि न सम्भवति अज्ञानं, तस्य सर्वज्ञ(त्वा)त्—इति वाच्यं, अज्ञानस्य सर्वज्ञत्वसाधकत्वेन तदविरोधित्वात्। ब्रह्मणो यदि स्वरूपप्रज्ञया सर्वज्ञत्वं विवक्षितं, तदा तस्य असङ्गस्य न अज्ञानं अन्तरेण अशेषार्थसङ्गतिः—इति सर्वज्ञत्वसिद्ध्यर्थमेव अज्ञानं अभ्युपगन्तव्यम्। प्रमाणतः सर्वज्ञत्वेऽपि प्रमातृत्वस्य प्रमाणप्रमेयसम्बन्धस्य च अज्ञानसम्बन्धमन्तरेण असिद्धेः

तस्मिन् अज्ञानवत्त्वं अवश्यं आश्रयितव्यं, अन्यथा सर्वज्ञत्वायोगात् ॥ अज्ञानविषयत्वमपि तस्यैव प्राग्भूतस्य ब्रह्मणोऽभ्युपगन्तव्यं, 'मां न जानामि त्वदुक्तं अर्थं न जानामि'—इति च भासमाने विषये तस्य अनुभवसिद्धत्वात् ॥ ब्रह्मणः चेत् अज्ञानाश्रयत्वं, विद्वदविद्वद्गुरुशिष्यादिव्यवस्था(ऽ)सिद्धिः—इति चेत्, न ।

यावदज्ञानं व्यवस्थायास्तद्बलादेव सुस्थता ।
सति ज्ञानेऽपनीतत्वान्न व्यवस्था ह्यपेक्ष्यते ॥

यावदज्ञानं सर्वव्यवस्थानां स्वप्नवत् उपपन्नत्वात्, निवृत्ते तु ज्ञानात् अज्ञाने–व्यवस्थाहेत्वभावात्, न कदाचिदपि व्यवस्थाऽस्ति ॥

प्रागितो मुक्तिरासीच्चेन्नेदानीं संसृतिर्भवेत् ।
न चेद्भविष्यतीत्यत्र प्रत्याशा न प्रकल्पते ॥
न शास्त्रस्य प्रमाणत्वान्मुक्तिः स्यादिति निश्चयः ।
सम्प्रदायश्च विद्यावत् कल्पितादुपपद्यते ॥

तस्मात्–ब्रह्मण्येव चिदात्मनि एकाज्ञानवशात् अशेषकल्पनासिद्धेः तदुच्छित्त्या पुरुषार्थपरिसमाप्तिः ॥

किञ्च, स्वप्नावस्थायां आत्मान्तरं अविद्यान्तरं वा न कल्प्यं, कल्पनागौरवात् ॥

किञ्च—सम्मतेनात्मनाऽज्ञानादन्यद्दृश्यं यदीष्यते ।
कल्पितं तर्हि तन्नो चेद्व्यवहारो न निर्वहेत् ॥

एकः तावत् आत्मा द्वयोः अपि आवयोः सम्प्रतिपन्नोऽस्ति, तस्य ज्ञानादेव अविवादसिद्धात् एकस्मात् अतिरिक्तं सर्वं प्रतिभाति । न वा प्रतिभाति चेत्, तर्हि तद्दृश्यं स्वप्नप्रपञ्चवत् अशेषमपि तदतिरिक्तं तदज्ञानविजृम्भितं इति न आत्मान्तराणि अकल्पितानि सम्भवन्ति । न च एतदज्ञानकल्पितानां एतदज्ञानात्मकानां ज्ञानाज्ञाने विज्ञायेत, एतदज्ञाने तदनुपलम्भात् । न चेत् एतस्य आत्मनः स्वव्यतिरिक्तं सर्वदृश्यं आश्रियते, कथं अस्य व्यवहारो न विरुध्यते, स्वव्यतिरिक्तपुरग्रामादिदर्शनापेक्षया तद्देशे गमनादिप्रवृत्तिदर्शनात् । न च एकस्मिन्नेव चिदात्मनि अनन्ताज्ञानाभ्युगमे निबन्धनं अस्ति, तदज्ञानात् एकस्मादेव विचित्रशक्तिमतो नानाविधार्थप्रतिभाससम्भवात् । न च एकस्य जीवस्य अनेकानि अज्ञानानि अभ्युपगम्यन्ते, "तत्त्वमसि" इति ऐकात्म्योपदेशात् जीवस्यैव ब्रह्मानिरस्या(°ह्मात्म्यातिरेका?)भावात् । "यावन्ति ज्ञानानि ताव-

न्ति अज्ञा(ना)नि" इति (अस्य) च–आत्माज्ञानस्य एकस्यैव आकारभेदाभिप्रायत्वात्–न अज्ञानभेदविषय(क)त्वम् । न च आकारभेदे संज्ञान्तरेण अज्ञानस्यैव भिन्नत्वं, तत्तत्कार्यप्रतियोगिकस्य एकस्यैव अज्ञानस्य तत्तदाकारभेदभाक्त्वात्, न हि पिता उपाध्यायः शिष्यो भ्राता पुत्रो जामाता–इत्यादिषु आकारभेदेऽपि स्वरूपभेदा भवन्ति । समस्तस्यैव भेदभानस्य अपारमार्थिकस्य एकाज्ञानसामर्थ्यादेव सम्भवात् न अज्ञानभेदे हेतुः अस्ति । गुरुशिष्यादिव्यवस्था च एकाज्ञानपक्षेऽपि स्वप्नवत् उपपन्ना—इत्युक्तम् ॥

ननु—किं स्वप्नकल्पकमेव अज्ञानं जाग्रद्व्यवहारकल्पकं, उत अन्यत् इति वक्तव्यम् । आद्ये, प्रबोधे स्वप्नकल्पकाज्ञाननिवृत्तौ, जाग्रद्व्यवहारोऽपि सर्वो निवर्तेत इति ब्रह्मविद्यां विनैव मुक्तिः स्यात्; अनिवृत्तौ च अज्ञानस्य–तत्त्वज्ञानात् तन्निवृत्तौ दृष्टान्ताभा(वा)त्–ब्रह्मज्ञानात् अज्ञाननिवृत्तिः न सिध्येत् । द्वितीये तु, अविद्याभेदसिद्धिः । यथा हि जाग्रत्स्वप्नविभेदकं नाना अज्ञानं अभ्युपगतं, तथैव मुक्तामुक्तादिरूपेण व्यावहारिकानन्तजीवानां शुकवामदेवपामरप्रभृतीनां प्रतिभानात् तदुपपत्तये तद्धेतुभूतानन्ताज्ञानाभ्युपगमेऽपि न किञ्चित् दूषणं—इति चेत्, मैवम्—

प्रथमस्याभ्युपेतत्वाद्दृष्टान्तस्यानपेक्षणात् ।
द्वितीयस्यानभीष्टत्वात्तद्दोषस्याप्रसक्तितः ॥

यद्यपि स्वप्नजागरितयोः एकमेव कल्पकं अज्ञानं–न तत्र स्वरूपभेदोऽस्ति, तथाऽपि तस्मिन् आकारभेदस्य उदीरितत्वात् प्रबोधे स्वप्नकल्पकाज्ञानाकारे निवृत्तेऽपि जाग्रद्व्यवहारो न निवर्तते, तद्धेत्वज्ञानाकारस्य अनिवृत्तत्वात् । न च–एवं तत्त्वज्ञानात् अज्ञान(नि)वृत्तौ दृष्टान्ता(भा)वात् ब्रह्म(ज्ञानाद)ज्ञाननिवृत्तिः न सिध्येत्–इति युक्तं, दृष्टान्तापेक्षां अन्तरेण "तरति शोकमात्मवित्" इत्यादि शास्त्रप्रामाण्यादेव ज्ञानात् अज्ञाननिवृत्त्यध्यवसायात् । न च–तर्हि "भूयश्चान्ते विश्वमायानिवृत्तिः" "इन्द्रो मायाभिः" इत्यादिश्रुतिप्रामाण्यात् अनेकानि अज्ञानानि तन्निवृत्तयश्च क्रमेण इति स्वीक्रियतां—इति वाच्यं, दर्शितश्रुत्यवष्टम्भात् अज्ञानाकारभेदः स्वनिवृत्तिक्रमश्च इत्यङ्गीकारेऽपि—मूलाज्ञानस्य अनेकाकारवतः स्वरूपे(ण) अभावात्, तत्त्वज्ञानायत्तायाश्च तन्निवृत्तेः उक्तत्वात् ।

न च स्वप्नजाग्रद्भेदकं अनेकं अज्ञानं अभीष्टं, तत्प्रकारभेदेऽपि तत्स्वरूपभेदाभावस्य उक्तत्वात् । अतो न तद्दृष्टान्तेन मुक्तामुक्तादिरूपेण अनन्तजीवप्रतिभानोपपत्तये तद्धेतुभूतानन्ताज्ञानाभ्युपगमोपपत्तिः ।

किञ्च शुकवामदेवपामरशब्दैः तत्तदुपाधिमात्रं वा तत्तदुपाध्युपहितं वा निष्कलं वा परिशुद्धं चैतन्यं परिगीयते ? तत्र प्रथमे द्वितीये च, उपाधिसहितस्य च कल्पितत्वेन अज्ञानतत्कार्यान्तर्भावात् न ज्ञानाज्ञाने युज्येते । तृतीये तु, तस्मिन्नेव प्रतिभानाभावात् निष्कृष्टचैतन्यनिविष्टं एकमेव अज्ञानं अखिलभेदप्रतिभाननिदानं इति अस्मदभीष्टसिद्धिः ॥

किञ्च अद्वैतवादे भे(द)प्रतिभानस्य प्रामाणिकत्वाभावात् अप्रामाणिकस्य च भ्रान्तस्य तस्य एकाज्ञानप्रयुक्तत्वसम्भवात् न अनेकाज्ञानकल्पना युक्ता । न हि कस्यचिदपि भेदस्य तत्त्वावेदकप्रमाणेन व्यावहारिकप्रमाणेन वा गम्यत्वं अद्वैतवादिभिः अभ्युपगम्यते, भेदमात्रस्य प्रातिभासिकत्वाभ्युपगमात् । जीवभेदस्य अनुमानादिव्यावहारिकमानगम्यत्वं इष्टं—इति चेत्, न, परस्पराश्रयत्वादिदोषदूषितभेदं गोचरयतः अनुमानादिमानस्य प्रातिभासिकत्वेऽपि व्यावहारिकमानत्वायोगात् । न हि व्यवहारदशायामेव अन्योन्याश्रयतादिग्रस्तं भेदं साधयतः अनुमानादेः अस्ति मानत्वं, प्रवृत्त्यवस्थायामेव प्रत्युत्पन्नबाधि(त)त्वाधिगमात् ॥

न च—उत्पन्नविद्यस्य द्वैतभाने भूमलक्षणब्रह्मप्राप्त्यभावप्रसक्तिः—इति युक्तं, जीवन्मुक्तेः आश्रयणात् । न च विदुषो द्वैताभाने "यावदधिकारमवस्थितिराधिकारिकाणाम्" इत्यादिसूत्रविरोधः, विदुषोऽप्यविद्यालेशवशात् द्वैतप्रतिभानाभ्युपगमात् ॥

तदेवं—चिदात्माश्रयं तद्विषयं च अज्ञानं एकमेव अशेषव्यवहारनिर्वाहकं जीवपक्षपाति प्रतिभाति । दृष्टं हि लोके मुखमा(त्र)सम्बन्धिनोऽपि दर्पणस्य प्रतिबिम्बपक्षपातित्वम् । न जीवः चिदात्मनो वस्तुतः अतिरिच्यते, तादात्म्योपदेशात्—इत्युक्तम् । किञ्च, "ब्रह्म वा इदमग्र आसीत्" इत्या(दि)श्रुत्या परिपूर्णचिदात्मतत्त्वमेव स्वाज्ञानात् आनर्थात्म्यकं (अनर्थात्मकं?) संसारं अनुभूय स्वज्ञानात् तन्निवृत्त्या स्वास्थ्यं अनुभवति—इति उच्यते । "तद्यो यो देवानां प्रत्यबुध्यत" इत्याद्यया श्रुत्या च भ्रान्तिसिद्धभेदानुवादेन तत्त्वज्ञानात् अज्ञाननिवृत्त्या पुरुषार्थसिद्धिः—इत्येतावन्मात्रं प्रदर्श्यते, न तु जीवभेदो अविद्याभेदो वा निगद्यते, ऐकात्म्यप्रमाणविरोधप्रसङ्गात् ।

तस्मात् एकमेव ब्रह्म चैतन्यैकतानं अनाद्यनिर्वाच्यानवच्छिन्नाविद्यासम्बन्धात् बद्धमिव प्रतिभासते । तदेव च वाक्यीयतत्त्वसाक्षात्कारात् एकाकिनो

मुक्तमिव भवति। वस्तुतस्तु न तत्र बन्धो मुक्तिः वा अस्ति, किन्तु परिपूर्णं परं ब्रह्म प्रत्यग्भूतं सच्चिदानन्दैकतानं अपाकृताशेषानर्थं परमपुरुषार्थरूपं—इति .आस्थेयम्।

तच्च इदं आत्मरूपं प्रत्यभिज्ञया स्थिरं आस्थितम्। न आत्मनि अभिज्ञा कर्मकर्तृत्वानुपपत्तेः संस्काराभावाच्च युक्ता-इति चेत्, मैवम्। आत्मनि 'अहं'-इति बुद्धेः अविद्यायाः वा वृत्तिः साभासा सत्त्वगुणानुगुण्येन समुद्भवति। तस्यां च आत्म(न)ः सन्निधौ समुत्पन्नायां कर्त्रन्तराभावात् आत्मनो मिथ्यैव कर्तृत्वं उपचर्यते। तस्याश्च आत्मैकाकारतया कर्मान्तराभावात् तस्यैव कर्मत्वमपि कल्प्यते। न च-एवं एकस्यां क्रियायां अभिज्ञासंज्ञितायां एकस्यैव कर्मकर्तृत्वं च इति विरोधः-शक्यते, कर्तृकर्मभावस्य प्रतिभासमात्रानुसारिणो यौक्तिकत्वानभ्युपगमात्, कल्पिते च प्रतीत्यनुसारिणि विरोधोद्भावनस्य अकिञ्चित्करत्वात्। साऽपि प्रागुक्ता वृत्तिः अभिज्ञारूपा विनश्यन्ती स्वाश्रये अन्तःकरणादौ संस्कारं आधाय विनश्यति, तेन च संवलितं अन्तःकरणादिगतं चैतन्यं तस्मिन्नेव आत्मनि 'सोऽहं'—इति प्रागुक्तवृत्तिसदृशीं वृत्तिं उत्पादयति। तत्र च कर्तृत्वं कर्मत्वं च आत्मनो यथापूर्वं परिकल्पते। वस्तुतस्तु न तस्मिन् क्रियाकारकफलविभागोऽस्ति, कूटस्थचैतन्यैकतानत्वात्॥

तथाऽपि कथं अद्वैतमतं कपिलाक्षपादादिवादे (सति) सेत्स्यति—इति चेत्, मैवं, वैशेषिकदर्शने दर्शितन्यायानुरोधेन दर्शनान्तरेषु अपि नियमासम्भवस्य लक्षणासम्भवस्य च अभिधानीयत्वात्।

तस्मात्—अद्वितीयं अखण्डैकरसं सच्चिदानन्दात्मकं आत्मतत्त्वं, तत्र च अनादि अनिर्वाच्यं एकं अज्ञानं अनन्तभेदप्रतिभाननिदानं, ततश्च अनेका(न)र्थकलुषितं आत्मतत्त्वं बद्धमिव अनुभूयमानं, वेदान्तवाक्योत्थतत्त्वसाक्षात्कारपराकृतसकार्याज्ञानं, मुक्तमिव भाति; परमार्थतो न बन्धो न मुक्तिः इति सकार्याज्ञाननिवृत्त्युपलक्षितं परिपूर्णं आत्मतत्त्वमेव परमपुरुषार्थरूपं परिशिष्टं अपरामृष्टामथसार्वं(°ष्टानर्थसार्थं?) आविर्भूताननतिशयानन्दं सिध्यति—इति सिद्धम्॥ ७०॥

वाक्यीया तत्त्वधीरेषा सर्वानर्थैककारणम्।<br>आत्माज्ञानमपाकृत्य प्रत्यगात्मनि लीयते॥<br>वाक्यीयबुद्धिवृत्त्या च त्यक्तत्वेनोपलक्षितः।<br>निवृत्तिशब्दलक्ष्यः स प्रत्यगात्मा विवक्षितः॥

तच्छब्दवाच्यो द्वाभ्यां च प्रकाराभ्यां विभज्यते ।
सदसत्सदसद्भ्योऽन्यस्तस्मादन्यश्च पञ्चमः ॥
चतुष्टयविशिष्टस्य मुख्यस्यैवाधिकारिणः ।
आचार्यादिष्टवाक्यीयधिया श्रेयः समाप्यते ॥
कृष्णं वृष्णिकुलाधीशं द्वारकाधिपतिं पतिम् ।
जगतस्तमहं वन्दे विष्णुं जिष्णुं सदा मुदा ॥
शुद्धानन्दपदद्वंद्वं द्वंद्वतापोपशान्तये ।
मुमुक्षुजनताचिन्त्यं सन्ततं चिन्तयाम्यहम् ॥
शुद्धानन्दपदाम्भोजस्मरणादरणान्मया ।
कृतिनामुपकाराय कृतोऽयं तर्कसङ्ग्रहः ॥
तर्कसङ्ग्रहसम्भूतागण्यपुण्यप्रभावतः ।
प्रीयतां द्वारकाधीशो भगवान्पुरुषोत्तमः ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशुद्धानन्दपूज्यपादशिष्यभगवदानन्दज्ञानविरचिते तर्कसङ्ग्रहे तृतीयः परिच्छेदः ।

---

॥ समाप्तश्चायं तर्कसङ्ग्रहः ॥



# तर्कसङ्ग्रहे उद्धृतानां वाक्यानां सूचीपत्रम् ।*

| वाक्यम् | त. सं. पृष्ठम् | स्थलनिर्देशः |
|---|---|---|
| अन्यत्रमना अभूवं नादर्शम् | ५५ | बृह० उप० १-५-३ |
| अशरीरं वाव | ९२ | छान्दो० उप० ८-१२-१ |
| असन्निकृष्टवाचा० तोऽपि वा ॥[1] | १०६ | मीमांसाश्लोकवार्तिकम् ( अनुमानपरिच्छेदे. श्लो० ५५-५६ ) |
| इन्द्रो मायाभिः | १३९ | ऋग्वेद ६-४७-१८ |
| उपलभ्याप्सु चेद्गन्धं० संश्रितम् ॥[2] | २२ | ( आप्तोक्तिः ) |
| एकस्यैवास्तु महिमा यन्नानेव प्रकाशते | १९ | ब्रह्मसिद्धिः ( सुरेश्वराचार्यकृता ) |
| गुरवः उपास्यन्तां…शिक्ष्यन्ते | १३५ | खण्डन० ( पृ० १२७. चौ. आ. ) |
| तत्त्वमसि | १३८ | छान्दो० ६-८-७ इ० |
| तद्यो यो देवानां प्रत्यबुध्यत | १४० | बृह० १-४-१० |
| तत्सत्यं | ७ | छान्दो० ६-८-७ इ० |
| तरति शोकमात्मवित् | १३९ | छान्दो० ७-१-३ |
| द्रव्याणि द्रव्यान्तरमारभन्ते, गुणाश्च गुणान्तरम् | ४१ | वैशेषिकसूत्रम् १-१-१० |
| द्वितीयाद्वै भयं भवति | ६२ | बृह० १-४-२ |
| न हि द्रष्टुः | ८६ | बृह० ४-३-२३ |
| नान्यत्र कारणात् कार्यं न चेत्तत्र क तद्भवेत्[3] | १३४ | |
| नेह नानास्ति | ५-७८-१३४-१३७ | बृह० ४-४-१९; कठ० ४-११ |
| ब्रह्म वा इदमग्र आसीत् | १४० | बृह० १-४-१० |
| भावत्वाधिष्ठिताः० विवर्जिताः ॥ | १८ | न्यायलीलावती. पृ. ३ |
| भूयश्चान्ते विश्वमायानिवृत्तिः | १३९ | श्वेता० १-१० |
| मीयमानैकरूपेषु न निषेधोऽवकाशवान् | १६ | |

* अस्मिन् ग्रन्थे ग्रन्थान्तरस्थितानि लक्षणानि पदार्थादीनां खण्डनार्थं समाहृतानि तान्यत्र न सङ्गृहीतानि ।

१ एतदुत्तरार्धे—ताद्रूप्येण परिच्छित्तिस्त० पि च ( इति मुद्रितपुस्तकपाठः )

२ एतदुत्तरार्धं तु—लाघवान्न तु भिन्नानां यच्चकास्त्यप्यभिन्नवत् ॥

३ 'एतदेवोक्तं गुरुभिः' इतिपूर्वकमुद्धृतेयं पंक्तिः आनन्दबोधेन प्रमाणमालायां पृ. ४.

अस्य पूर्वार्धं तु—अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते । इत्येवं विद्यारण्यकृतविवरणप्रमेयसंग्रहे द्वितीयसूत्रस्य प्रथमवर्णके उक्तम् ।

---

१ उद्धृतेयं पंक्तिः न्यायमकरन्दे (पृ. १२७) विद्यासागरकृतखण्डनखण्डखाद्यटीकायां च (पृ. ४१४ चौ. आ.)

## सङ्ग्रहश्लोकानामकारादिक्रमेण सूचीपत्रम् ।

पृष्ठम्

## III

# तर्कसङ्ग्रहे निरूपितानां पदार्थानां अकारादिक्रमेण सूचीपत्रम्

* 'सदेहस्य आत्मनो विपच्यमानकर्माशयसहितस्य मनसा सह संयोगः सम्बन्धः जीवनम्' ( कन्दली.पृ.२६३ ) इति जीवनस्य विशिष्टार्थवत्त्वात् अत्र 'जीवपूर्वकः' इति अर्वाचीनानां पाठः दनुसार्यर्थश्च भ्रान्तिमूलको भातः ।

* ' केवलान्वयी हेतुविशेषः '—इति, ' केवलान्वयिनि व्यापके प्रवर्तमानो हेतुः पक्षे व्यापकप्रतीत्यपर्यवसानबलात् अन्वयव्यतिरेकि साध्यविशेषं वाद्यभिमतं साधयन् हि महाविद्या-इत्युच्यते ' इति च महाविद्याविडंबने महादेववादीन्द्राः । महाविद्याविडम्बनसंज्ञकग्रन्थे महाविद्यानुमानानि खण्डितानि भट्टमहादेववादीन्द्रैः । तदेवोक्तं च चित्सुखीटीकायां—' दग्धसारं चेदं वादीन्द्रदावानलेन महाविद्याविपिनम् ' इति ।

* यथा सर्पप्रचुरायां भूमौ तद्घातकस्य नकुलस्य अभावः अनुमीयते, एवं विरोधिनोः एकत्र अनवस्थितिः इति।



* इति न्यायवार्तिकतात्पर्यटीकायाम्।

पृष्ठम्



* प्राचीनकाले लिखितेषु पुस्तकेषु सर्वत्र 'स्थितस्थापकः' इति पाठो वर्तते। ‡ स्फुट्यते व्यज्यते वर्णैः इति। एकरूपायाः बुद्धेः अनेकवर्णालम्बनत्वासंभवात् पदादिबुद्धिप्रमाणकः।